# स्कन्दमहापुराणम्

नमः परमदेवाय त्रैगुण्याविजितात्मने
सर्वतो योगरूपाय संसाराभावहेतवे १

स्थितिसंरोधसर्गाणां हेतवेऽन्तःप्रसारिणे
षड्विंशाय प्रधानाय महादेवाय धीमते २

प्रजापतेर्महाक्षेत्रे गङ्गाकालिन्दिसंगमे
प्रयागे परमे पुण्ये ब्रह्मणो लोकवर्त्मनि ३

मुनयः संशितात्मानस्तपसा क्षीणकल्मषाः
तीर्थसंप्लवनार्थाय पौर्णमास्यां कृताह्निकाः ४

पौराणिकमपश्यन्त सूतं सत्यपरायणम्
स्नात्वा तस्मिन्महातीर्थे प्रणामार्थमुपागतम् ५

दृष्ट्वा ते सूतमायान्तमृषयो हृष्टमानसाः
आशास्यासनसंवेशं तद्योग्यं समकल्पयन् ६

स प्रणम्य च तान्सर्वान्सूतस्तान्मुनिपुंगवान्
प्रदत्तमासनं भेजे सर्वधर्मसमन्वितः ७

तमासीनमपृच्छन्त मुनयस्तपसैधिताः
ब्रह्मसत्त्रे पुरा साधो नैमिशारण्यवासिनाम् ८

कथितं भारताख्यानं पुराणं च परं त्वया
तेन नः प्रतिभासि त्वं साक्षात्सत्यवतीसुतः ९

सर्वागमपरार्थज्ञः सत्यधर्मपरायणः
द्विजपूजारतो नित्यं तेन पृच्छां त्वमर्हसि १०

भारताख्यानसदृशं पुराणाद्यद्विशिष्यते
तत्त्वा पृच्छाम वै जन्म कार्त्तिकेयस्य धीमतः ११

इमे हि मुनयः सर्वे त्वदुपास्तिपरायणाः
स्कन्दसंभवशुश्रूषासंजातौत्सुक्यमानसाः १२

एवमुक्तस्तदा सूतः संसिद्धैर्मुनिपुंगवैः
प्रोवाचेदं मुनीन्सर्वान्वचो भूतार्थवाचकम् १३

शृणुध्वं मुनयः सर्वे कार्त्तिकेयस्य सम्भवम्
ब्रह्मण्यत्वं समाहात्म्यं वीर्यं च त्रिदशाधिकम् १४

मुमुक्षया परं स्थानं याते शुकमहात्मनि
सुतशोकाभिसंतप्तो व्यासस्त्र्यम्बकमैक्षत १५

दृष्ट्वैव स महेशानं व्यासोऽभूद्विगतव्यथः
विचरन्स तदा लोकान्मुनिः सत्यवतीसुतः १६

मेरुशृङ्गेऽथ ददृशे ब्रह्मणः सुतमग्रजम्
सनत्कुमारं वरदं योगैश्वर्यसमन्वितम् १७

विमाने रविसंकाशे तिष्ठन्तमनलप्रभम्
मुनिभिर्योगसंसिद्धैस्तपोयुक्तैर्महात्मभिः १८

वेदवेदाङ्गतत्त्वज्ञैः सर्वधर्मागमान्वितैः
सकलावाप्तविद्यैस्तु चतुर्वक्त्रमिवावृतम् १९

दृष्ट्वा तं सुमहात्मानं व्यासो मुनिमथास्थितम्
ववन्दे परया भक्त्या साक्षादिव पितामहम् २०

ब्रह्मसूनुरथ व्यासं समायातं महौजसम्

परिष्वज्य परं प्रेम्णा प्रोवाच वचनं शुभम्  २१

दिष्ट्या त्वमसि धर्मज्ञ प्रसादात्पारमेश्वरात्
अपेतशोकः सम्प्राप्तः पृच्छस्व प्रवदाम्यहम्  २२

श्रुत्वाथ वचनं सूनोर्ब्रह्मणो मुनिपुंगवः
इदमाह वचो विप्राश्चिरं यद्धृदये स्थितम्  २३

कुमारस्य कथं जन्म कार्त्तिकेयस्य धीमतः
किंनिमित्तं कुतो वास्य इच्छाम्येतद्धि वेदितुम्  २४

कथं रुद्रसुतश्चासौ वह्निगङ्गासुतः कथम्
उमायास्तनयश्चैव स्वाहायाश्च कथं पुनः
सुपर्ण्याश्चाथ मातॄणां कृत्तिकानां कथं च सः  २५

कश्चासौ पूर्वमुत्पन्नः किंतपाः कश्च विक्रमः
भूतसंमोहनं ह्येतत्कथयस्व यथातथम्  २६

सूत उवाच
एवं स पृष्टस्तेजस्वी ब्रह्मणः पुत्रसत्तमः
उवाच सर्वं सर्वज्ञो व्यासायाक्लिष्टकारिणे
तच्छृणुध्वं यथातत्त्वं कीर्त्यमानं मयानघाः  २७

इति स्कन्दपुराणे प्रथमोऽध्यायः

स्कन्दपुराण २

सनत्कुमार उवाच
प्रपद्ये देवमीशानं सर्वज्ञमपराजितम्
महादेवं महात्मानं विश्वस्य जगतः पतिम्  १

शक्तिरप्रतिघा यस्य ऐश्वर्यं चैव सर्वशः
स्वामित्वं च विभुत्वं च स्वकृतानि प्रचक्षते  २

तस्मै देवाय सोमाय प्रणम्य प्रयतः शुचिः
पुराणाख्यानजिज्ञासोर्वक्ष्ये स्कन्दोद्भवं शुभम्  ३

देहावतारो देवस्य रुद्रस्य परमात्मनः
प्राजापत्याभिषेकश्च हरणं शिरसस्तथा  ४

दर्शनं षट्कुलीयानां चक्रस्य च विसर्जनम्
नैमिशस्योद्भवश्चैव सत्रस्य च समापनम्  ५

ब्रह्मणश्चागमस्तत्र तपसश्चरणं तथा
शर्वस्य दर्शनं चैव देव्याश्चैव समुद्भवः  ६

सत्या विवादश्च तथा दक्षशापस्तथैव च
मेनायां च यथोत्पत्तिर्यथा देव्याः स्वयंवरम्  ७

देवानां वरदानं च वसिष्ठस्य च धीमतः
पराशरस्य चोत्पत्तिर्व्यासस्य च महात्मनः  ८

वसिष्ठकौशिकाभ्यां च वैरोद्भवसमापनम्
वाराणस्याश्च शून्यत्वं क्षेत्रमाहात्म्यवर्णनम्  ९

रुद्रस्य चात्र सांनिध्यं नन्दिनश्चाप्यनुग्रहः
गणानां दर्शनं चैव कथनं चाप्यशेषतः  १०

कालीव्याहरणं चैव तपश्चरणमेव च
सोमनन्दिसमाख्यानं वरदानं तथैव च  ११

गौरीत्वं पुत्रलम्भश्च देव्या उत्पत्तिरेव च
कौशिक्या भूतमातृत्वं सिंहाश्च रथिनस्तथा  १२

गौर्याश्च निलयो विन्ध्ये विन्ध्यसूर्यसमागमः

अगस्त्यस्य च माहात्म्यं वधः सुन्दनिसुन्दयोः १३

निसुम्भसुम्भनिर्याणं महिषस्य वधस्तथा
अभिषेकश्च कौशिक्या वरदानमथापि च १४

अन्धकस्य तथोत्पत्तिः पृथिव्याश्चैव बन्धनम्
हिरण्याक्षवधश्चैव हिरण्यकशिपोस्तथा १५

बलिसंयमनं चैव देव्याः समय एव च
देवानां गमनं चैव अग्नेर्दूतत्वमेव च १६

देवानां वरदानं च शुक्रस्य च विसर्जनम्
सुतस्य च तथोत्पत्तिर्देव्याश्चान्धकदर्शनम् १७

शैलादिदैत्यसंमर्दो देव्याश्च शतरूपता
आर्यावरप्रदानं च शैलादिस्तव एव च १८

देवस्यागमनं चैव वृत्तस्य कथनं तथा
पतिव्रतायाश्चाख्यानं गुरुशुश्रूषणस्य च १९

आख्यानं पञ्चचूडायास्तेजसश्चाप्यधृष्यता
दूतस्यागमनं चैव संवादोऽथ विसर्जनम् २०

अन्धकासुरसंवादो मन्दरागमनं तथा
गणानामागमश्चैव संख्यानश्रवणं तथा २१

निग्रहश्चान्धकस्याथ युद्धेन महता तथा
शरीरार्धप्रदानं च अशोकसुतसंग्रहः २२

भस्मसोमोद्भवश्चैव श्मशानवसतिस्तथा
रुद्रस्य नीलकण्ठत्वं तथायतनवर्णनम् २३

उत्पत्तिर्यक्षराजस्य कुबेरस्य च धीमतः
निग्रहो भुजगेन्द्राणां शिखरस्य च पातनम् २४

त्रैलोक्यस्य सशक्रस्य वशीकरणमेव च
देवसेनाप्रदानं च सेनापत्याभिषेचनम् २५

नारदस्यागमश्चैव तारकप्रेषितस्य ह
वधश्च तारकस्योग्रो यात्रा भद्रवटस्य च २६

महिषस्य वधश्चैव क्रौञ्चस्य च निबर्हणम्
शक्तेरुद्धरणं चैव तारकस्य वधः शुभः २७

देवासुरभयोत्पत्तिस्त्रैपुरं युद्धमेव च
प्रह्लादविग्रहश्चैव कृतघ्नाख्यानमेव च
महाभाग्यं ब्राह्मणानां विस्तरेण प्रकीर्त्यते २८

एतज्ज्ञात्वा यथावद्धि कुमारानुचरो भवेत्
बलवान्मतिसम्पन्नः पुत्रं चाप्नोति संमतम् २९

इति स्कन्दपुराणे द्वितीयोऽध्यायः

स्कन्दपुराण ३

सनत्कुमार उवाच
शृणुष्वेमां कथां दिव्यां सर्वपापप्रणाशनीम्
कथ्यमानां मया चित्रां बह्वर्थां श्रुतिसंमिताम्
यां श्रुत्वा पापकर्मापि गच्छेच्च परमां गतिम् १

न नास्तिकाश्रद्दधाने शठे चापि कथंचन
इमां कथामनुब्रूयात्तथा चासूयके नरे २

इदं पुत्राय शिष्याय धार्मिकायानसूयवे
कथनीयं महाब्रह्मन्देवभक्ताय वा भवेत्

कुमारभक्ताय तथा श्रद्दधानाय चैव हि ३

पुरा ब्रह्मा प्रजाध्यक्षः अण्डेऽस्मिन्सम्प्रसूयते
सोऽज्ञानात्पितरं ब्रह्मा न वेद तमसावृतः ४

अहमेक इति ज्ञात्वा सर्वांल्लोकानवैक्षत
न चापश्यत तत्रान्यं तपोयोगबलान्वितः ५

पुत्र पुत्रेति चाप्युक्तो ब्रह्मा शर्वेण धीमता
प्रणतः प्राञ्जलिर्भूत्वा तमेव शरणं गतः ६

स दत्त्वा ब्रह्मणे शम्भुः स्रष्टत्वं ज्ञानसंहितम्
विभुत्वं चैव लोकानामन्तर्धे परमेश्वरः ७

तदेषोपनिषत्प्रोक्ता मया व्यास सनातना
यां श्रुत्वा योगिनो ध्यानात्प्रपद्यन्ते महेश्वरम् ८

ब्रह्मं च यो विदधे पुत्रमग्रे ज्ञानं च यः प्रहिणोति स्म तस्मै
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ९

स व्यास पितरं दृष्ट्वा स्वदीप्त्या परया युतम्
पुत्रकामः प्रजाहेतोस्तपस्तीव्रं चकार ह १०

महता योगतपसा युक्तस्य सुमहात्मनः
अचिरेणैव कालेन पिता सम्प्रतुतोष ह ११

दर्शनं चागमत्तस्य वरदोऽस्मीत्युवाच ह
स तुष्टाव नतो भूत्वा कृत्वा शिरसि चाञ्जलिम् १२

नमः परमदेवाय देवानामपि वेधसे
स्रष्ट्रे वै लोकतन्त्राय ब्रह्मणः पतये नमः १३

एकस्मै शक्तियुक्ताय अशक्तिरहिताय च
अनन्तायाप्रमेयाय इन्द्रियाविषयाय च १४

व्यापिने व्याप्तपूर्वाय अधिष्ठात्रे प्रचोदिने
कृतप्रचेतनायैव तत्त्वविन्यासकारिणे १५

प्रधानचोदकायैव गुणिनां शान्तिदाय च
दृष्टिदाय च सर्वेषां स्वयं वै दर्शनाय च १६

विषयग्राहिणे चैव नियमस्य च कारिणे
मनसः करणानां च तत्रैव नियमस्य च १७

भूतानां गुणकर्त्रे च शक्तिदाय तथैव च
कर्त्रे ह्यण्डस्य मह्यं च अचिन्त्यायाग्रजाय च
अप्रमेय पितर्नित्यं प्रीतो नो दिश शक्वरीम् १८

तस्यैवं स्तुवतो व्यास देवदेवो महेश्वरः
तुष्टोऽब्रवीत्स्वयं पुत्रं ब्रह्माणं प्रणतं तथा १९

यस्मात्ते विदितं वत्स सूक्ष्ममेतन्महाद्युते
तस्माद्ब्रह्मेति लोकेषु नाम्ना ख्यातिं गमिष्यसि २०

यस्माच्चाहं पितेत्युक्तस्त्वया बुद्धिमतां वर
तस्मात्पितामहत्वं ते लोके ख्यातिं गमिष्यति २१

प्रजार्थं यच्च ते तप्तं तप उग्रं सुदुश्चरम्
तस्मात्प्रजापतित्वं ते ददानि प्रयतात्मने २२

एवमुक्त्वा स देवेशो मूर्तिमत्योऽसृजत्स्त्रियः
यास्ताः प्रकृतयस्त्वष्टौ विशेषाश्चेन्द्रियैः सह
भावाश्च सर्वे ते देवमुपतस्थुः स्वरूपिणः २३

तानुवाच ततो देवः पतिर्युक्तः स्वतेजसा
एतमद्याभिषेकेण सम्पादयत मा चिरम्  २४

ताभिः स्वं स्वं समादाय भावं दिव्यमतर्कितम्
अभिषिक्तो बभूवेति प्रजापतिरतिद्युतिः  २५

तत्रैवं योगिनः सूक्ष्मं दृष्ट्वा दिव्येन चक्षुषा
पुराणं योगतत्त्वज्ञा गायन्ति त्रिगुणान्वितम्  २६

रुद्रः स्रष्टा हि सर्वेषां भूतानां तव च प्रभो
अस्माभिश्च भवान्सार्धं जगतः सम्प्रवर्तकः  २७

स देवस्तोषितः सम्यक्परमैश्वर्ययोगधृक्
ब्रह्माणमग्रजं पुत्रं प्राजापत्येऽभ्यषेचयत्  २८

यः कृत्वा बहुविधमार्गयोगयुक्तं तत्त्वाख्यं जगदिदमादराद्युयोज
देवानां परममनन्तयोगयुक्तं मायाभिस्त्रिभुवनमन्धमप्रसादम्  २९

सर्वेषां मनसि सदावतिष्ठमानो जानानः शुभमशुभं च भूतनाथः
तं देवं प्रमथपतिं प्रणम्य भक्त्या नित्यं वै शरणमुपैमि सूक्ष्मसूक्ष्मम्  ३०

इति स्कन्दपुराणे तृतीयोऽध्यायः

## स्कन्दपुराण ४

सनत्कुमार उवाच
प्राजापत्यं ततो लब्ध्वा प्रजाः स्रष्टुं प्रचक्रमे
प्रजास्ताः सृज्यमानाश्च न विवर्धन्ति तस्य ह  १

स कुर्वाणस्तथा सृष्टिं शक्तिहीनः पितामहः
सृष्ट्यर्थं भूय एवाथ तपश्चर्तुं प्रचक्रमे  २

सृष्टिहेतोस्तपस्तस्य ज्ञात्वा त्रिभुवनेश्वरः

तेजसा जगदाविश्य आजगाम तदन्तिकम्
स्रष्टा तस्य जगन्नाथोऽदर्शयत्स्वतनौ जगत् ३

स्वयमागत्य देवेशो महाभूतपतिर्हरः
व्याप्येव हि जगत्कृत्स्नं परमेण स्वतेजसा
शम्भुः प्राह वरं वत्स याचस्वेति पितामहम् ४

तं ब्रह्मा लोकसृष्ट्यर्थं पुत्रस्त्वं मनसाब्रवीत्
स ज्ञात्वा तस्य संकल्पं ब्रह्मणः परमेश्वरः
मूढोऽयमिति संचिन्त्य प्रोवाच वरदः स्वयम् ५

आगतं पितरं मा त्वं यस्मात्पुत्रं समीहसे
मन्मूर्तिस्तनयस्तस्माद्भविष्यति ममाज्ञया ६

स च ते पुत्रतां यात्वा मदीयो गणनायकः
रुद्रो विग्रहवान्भूत्वा मूढ त्वां विनयिष्यति ७

सर्वविद्याधिपत्यं च योगानां चैव सर्वशः
बलस्याधिपतित्वं च अस्त्राणां च प्रयोक्तृता ८

मया दत्तानि तस्याशु उपस्थास्यन्ति सर्वशः
धनुः पिनाकं शूलं च खड्गं परशुरेव च ९

कमण्डलुस्तथा दण्डः अस्त्रं पाशुपतं तथा
संवर्तकाशनिश्चैव चक्रं च प्रतिसर्गिकम्
एवं सर्वर्द्धिसम्पन्नः सुतस्ते स भविष्यति १०

एवमुक्त्वा गते तस्मिन्नन्तर्धानं महात्मनि
ब्रह्मा चक्रे तदा चेष्टिं पुत्रकामः प्रजापतिः ११

स जुह्वञ्छ्रमसंयुक्तः प्रतिघातसमन्वितः

समिद्युक्तेन हस्तेन ललाटं प्रममार्ज ह १२

समित्संयोगजस्तस्य स्वेदबिन्दुर्ललाटजः
पपात ज्वलने तस्मिन्द्विगुणं तस्य तेजसा १३

तद्धि माहेश्वरं तेजः संधितं ब्रह्मणि स्नुतम्
प्रेरितं देवदेवेन निपपात हविर्भुजि १४

क्षणे तस्मिन्महेशेन स्मृत्वा तं वरमुत्तमम्
प्रेषितो गणपो रुद्रः सद्य एवाभवत्तदा १५

तच्च संस्वेदजं तेजः पूर्वं ज्वलनयोजितम्
भूत्वा लोहितमाश्वेव पुनर्नीलमभूत्तदा १६

नीललोहित इत्येव तेनासावभवत्प्रभुः
त्र्यक्षो दशभुजः श्रीमान्ब्रह्माणं छादयन्निव १७

शर्वाद्यैर्नामभिर्ब्रह्मा तनूभिश्च जलादिभिः
स्तुत्वा तं सर्वगं देवं नीललोहितमव्ययम् १८

ज्ञात्वा सर्वसृजं पश्चान्महाभूतप्रतिष्ठितम्
असृजद्द्विविधास्त्वन्याः प्रजाः स जगति प्रभुः १९

सोऽपि योगं समास्थाय ऐश्वर्येण समन्वितः
लोकान्सर्वान्समाविश्य धारयामास सर्वदा २०

ब्रह्मणोऽपि ततः पुत्रा दक्षधर्मादयः शुभाः
असृजन्त प्रजाः सर्वा देवमानुषसंकुलाः २१

अथ कालेन महता कल्पेऽतीते पुनः पुनः
प्रजा धारयतो योगादस्मिन्कल्प उपस्थिते २२

प्रतिष्ठितायां वार्त्तायां प्रवृत्ते वृष्टिसर्जने
प्रजासु च विवृद्धासु प्रयागे यजतश्च ह २३

ब्रह्मणः षट्कुलीयास्ते ऋषयः संशितव्रताः
मरीचयोऽत्रयश्चैव वसिष्ठाः क्रतवस्तथा २४

भृगवोऽङ्गिरसश्चैव तपसा दग्धकिल्बिषाः
ऊचुर्ब्रह्माणमभ्येत्य सहिताः कर्मणोऽन्तरे २५

भगवन्नन्धकारेण महता स्मः समावृताः
खिन्ना विवदमानाश्च न च पश्याम यत्परम् २६

एतं नः संशयं देव चिरं हृदि समास्थितम्
त्वं हि वेत्थ यथातत्त्वं कारणं परमं हि नः २७

किं परं सर्वभूतानां बलीयश्चापि सर्वतः
केन चाधिष्ठितं विश्वं को नित्यः कश्च शाश्वतः २८

कः स्रष्टा सर्वभूतानां प्रकृतेश्च प्रवर्तकः
कोऽस्मान्सर्वेषु कार्येषु प्रयुनक्ति महामनाः २९

कस्य भूतानि वश्यानि कः सर्वविनियोजकः
कथं पश्येम तं चैव एतन्नः शंस सर्वशः ३०

एवमुक्तस्ततो ब्रह्मा सर्वेषामेव संनिधौ
देवानां च ऋषीणां च गन्धर्वोरगरक्षसाम् ३१

यक्षाणामसुराणां च ये च कुत्र प्रवर्तकाः
पक्षिणां सपिशाचानां ये चान्ये तत्समीपगाः
उत्थाय प्राञ्जलिः प्राह रुद्रेति त्रिः प्लुतं वचः ३२

स चापि तपसा शक्यो द्रष्टुं नान्येन केनचित्
स स्रष्टा सर्वभूतानां बलवांस्तन्मयं जगत्
तस्य वश्यानि भूतानि तेनेदं धार्यते जगत्  ३३

ततस्ते सर्वलोकेशा नमश्चक्रुर्महात्मने  ३४

ऋषय ऊचुः
किं तन्महत्तपो देव येन दृश्येत स प्रभुः
तन्नो वदस्व देवेश वरदं चाभिधत्स्व नः  ३५

पितामह उवाच
सत्रं महत्समासध्वं वाङ्मनोदोषवर्जिताः
देशं च वः प्रवक्ष्यामि यस्मिन्देशे चरिष्यथ  ३६

ततो मनोमयं चक्रं स सृष्ट्वा तानुवाच ह
क्षिप्तमेतन्मया चक्रमनुव्रजत मा चिरम्  ३७

यत्रास्य नेमिः शीर्येत स देशस्तपसः शुभः
ततो मुमोच तच्चक्रं ते च तत्समनुव्रजन्  ३८

तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्यत
नैमिशं तत्स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम्  ३९

तत्पूजितं देवमनुष्यसिद्धै रक्षोभिरुग्रैरुरगैश्च दिव्यैः
यक्षैः सगन्धर्वपिशाचसंघैः सर्वाप्सरोभिश्च दितेः सुतैश्च  ४०

विप्रैश्च दान्तैः शमयोगयुक्तैस्तीर्थैश्च सर्वैरपि चावनीध्रैः
गन्धर्वविद्याधरचारणैश्च साध्यैश्च विश्वैः पितृभिः स्तुतं च  ४१

इति स्कन्दपुराणे चतुर्थोऽध्यायः

स्कन्दपुराण ५

सनत्कुमार उवाच
तन्नैमिशं समासाद्य ऋषयो दीप्ततेजसः
दिव्यं सत्त्रं समासन्त महद्वर्षसहस्त्रिकम् १

एकाग्रमनसः सर्वे निर्ममा ह्यनहंकृताः
ध्यायन्तो नित्यमीशेशं सदारतनयाग्नयः २

तन्निष्ठास्तत्पराः सर्वे तद्युक्तास्तदपाश्रयाः
सर्वक्रियाः प्रकुर्वाणास्तमेव मनसा गताः ३

तेषां तं भावमालक्ष्य मातरिश्वा महातपाः
सर्वप्राणिचरः श्रीमान्सर्वभूतप्रवर्तकः
ददौ स रूपी भगवान्दर्शनं सत्त्रिणां शुभः ४

तं ते दृष्ट्वार्चयित्वा च मातरिश्वानमव्ययम्
आसीनमासने पुण्ये ऋषयः संशितव्रताः
पप्रच्छुरुद्भवं कृत्स्नं जगतः प्रलयं तथा ५

स्थितिं च कृत्स्नां वंशांश्च युगमन्वन्तराणि च
वंशानुचरितं कृत्स्नं दिव्यमानं तथैव च ६

अष्टानां देवयोनीनामुत्पत्तिं प्रलयं तथा
पितृसर्गं तथाशेषं ब्रह्मणो मानमेव च ७

चन्द्रादित्यगतिं सर्वां ताराग्रहगतिं तथा
स्थितिं सर्वेश्वराणां च द्वीपधर्ममशेषतः
वर्णाश्रमव्यवस्थानं यज्ञानां च प्रवर्तनम् ८

एतत्सर्वमशेषेण कथयामास स प्रभुः
दिव्यं वर्षसहस्त्रं च तेषां तदभियात्तथा ९

अथ दिव्येन रूपेण सामवाग्दिङ्गिनरीक्षणा
यजुर्घ्राणाथर्वशिराः शब्दजिह्वा शुभा सती १०

न्यायश्रोत्रा निरुक्तत्वगृक्पादपदगामिनी
कालबाहूर्वर्षकरा दिवसाङ्गुलिधारिणी ११

कलादिभिः पर्वभिश्च मासैः कररुहैस्तथा
कल्पसाधारणा दिव्या शिक्षाविद्योन्नतस्तनी १२

छन्दोविचितिमध्या च मीमांसानाभिरेव च
पुराणविस्तीर्णकटिर्धर्मशास्त्रमनोरथा १३

आश्रमोरूर्वर्णजानुर्यज्ञगुल्फा फलाङ्गुलिः
लोकवेदशरीरा च रोमभिश्छान्दसैः शुभैः १४

श्रद्धाशुभाचारवस्त्रा योगधर्माभिभाषिणी
वेदीमध्याद्विनिःसृत्य प्रवृत्ता परमाम्भसा १५

तस्यान्तेऽवभृथे प्लुत्य वायुना सह संगताः
तामपृच्छन्त का न्वेषा वायुं देवं महाधियम् १६

उवाच स महातेजा ऋृषीन्धर्मानुभावितान्
शुद्धाः स्थ तपसा सर्वे महान्धर्मश्च वः कृतः १७

यस्मादियं नदी पुण्या ब्रह्मलोकादिहागता
इयं सरस्वती नाम ब्रह्मलोकविभूषणा १८

प्रथमं मर्त्यलोकेऽस्मिन्युष्मत्सिद्ध्यर्थमागता
नास्याः पुण्यतमा काचित्त्रिषु लोकेषु विद्यते १९

ऋृषय ऊचुः

कथमेषा महापुण्या प्रवृत्ता ब्रह्मलोकगा
कारणं किं च तत्रासीदेतदिच्छाम वेदितुम् २०

वायुरुवाच
अत्र वो वर्तयिष्यामि इतिहासं पुरातनम्
ब्रह्मणश्चैव संवादं पुरा यज्ञस्य चैव ह २१

यज्ञैरिष्ट्वा पुरा देवो ब्रह्मा दीप्तेन तेजसा
असृजत्सर्वभूतानि स्थावराणि चराणि च २२

स दृष्ट्वा दीप्तिमान्देवो दीप्त्या परमया युतः
अवेक्षमाणः स्वाँल्लोकांश्चतुर्भिर्मुखपङ्कजैः २३

देवादीन्मनुष्यादींश्च दृष्ट्वा दृष्ट्वा महामनाः
अमन्यत न मेऽन्योऽस्ति समो लोके न चाधिकः २४

योऽहमेताः प्रजाः सर्वाः सप्तलोकप्रतिष्ठिताः
देवमानुषतिर्यक्षु ग्रसामि विसृजामि च २५

अहं स्रष्टा हि भूतानां नान्यः कश्चन विद्यते
नियन्ता लोककर्ता च न मयास्ति समः क्वचित् २६

तस्यैवं मन्यमानस्य यज्ञ आगान्महामनाः
उवाच चैनं दीप्तात्मा मैवं मंस्था महामते
अयं हि तव संमोहो विनाशाय भविष्यति २७

न युक्तमीदृशं तेऽद्य सत्त्वस्थस्यात्मयोनिनः
स्रष्टा त्वं चैव नान्योऽस्ति तथापि न यशस्करम् २८

अहं कर्ता हि भूतानां भुवनस्य तथैव च
करोमि न च संमोहं यथा त्वं देव कत्थसे २९

तमुवाच तदा ब्रह्मा न त्वं धारयिता विभो
अहमेव हि भूतानां धर्ता भर्ता तथैव च
मया सृष्टानि भूतानि त्वमेवात्र विमुह्यसे ३०

अथागात्तत्र संविग्नो वेदः परमदीप्तिमान्
उवाच चैव तौ वेदो नैतदेवमिति प्रभुः ३१

अहं श्रेष्ठो महाभागौ न वदाम्यनृतं क्वचित्
शृणुध्वं मम यः कर्ता भूतानां युवयोश्च ह ३२

परमेशो महादेवो रुद्रः सर्वगतः प्रभुः
येनाहं तव दत्तश्च कृतस्त्वं च प्रजापतिः ३३

यज्ञोऽयं यत्प्रसूतिश्च अण्डं यत्रास्ति संस्थितम्
सर्वं तस्मात्प्रसूतं वै नान्यः कर्तास्ति नः क्वचित् ३४

तमेवंवादिनं देवो ब्रह्मा वेदमभाषत
अहं श्रुतीनां सर्वासां नेता स्रष्टा तथैव च ३५

मत्प्रसादाद्धि वेदस्त्वं यज्ञश्चायं न संशयः
मूढौ युवामधर्मो वा भवद्ध्यामन्यथा कृतः
प्रायश्चित्तं चरध्वं वः किल्बिषान्मोद्‍यथस्ततः ३६

एवमुक्ते तदा तेन महाञ्छब्दो बभूव ह
आदित्यमण्डलाकारमदृश्यत च मण्डलम्
महच्छब्देन महता उपरिष्टाद्वियत्स्थितम् ३७

स चापि तस्माद्विभ्रष्टो भूतलं समुपाश्रितः
हिमवत्कुञ्जमासाद्य नानाविहगनादितम्
व्योमगश्च चिरं भूत्वा भूमिगः सम्बभूव ह ३८

ततो ब्रह्मा दिशः सर्वा निरीक्ष्य मुखपङ्कजैः
चतुर्भिर्न वियत्स्थं तमपश्यत्स पितामहः ३९

स मुखं पञ्चमं दीप्तमसृजन्मूर्ध्नि संस्थितम्
तेनापश्यद्वियत्स्थं तं सूर्यायुतसमप्रभम्
आदित्यमण्डलाकारं शब्दवद्घोरदर्शनम् ४०

तं दृष्ट्वा पञ्चमं तस्य शिरो वै क्रोधजं महत्
संवर्तकाग्निसदृशं ग्रसिष्यत्तमवर्धत ४१

वर्धमानं तदा तत्तु वडवामुखसंनिभम्
दीप्तिमच्छब्दवच्चैव देवोऽसौ दीप्तमण्डलः ४२

हस्ताङ्गुष्ठनखेनाशु वामेनावज्ञयैव हि
चकर्त तन्महद्घोरं ब्रह्मणः पञ्चमं शिरः ४३

दीप्तिकृत्तशिराः सोऽथ दुःखेनोस्त्रेण चार्दितः
पपात मूढचेता वै योगधर्मविवर्जितः ४४

ततः सुप्तोत्थित इव संज्ञां लब्ध्वा महातपाः
मण्डलस्थं महादेवमस्तौषीद्दीनया गिरा ४५

ब्रह्मोवाच
नमः सहस्रनेत्राय शतनेत्राय वै नमः
नमो विवृतवक्त्राय शतवक्त्राय वै नमः ४६

नमः सहस्रवक्त्राय सर्ववक्त्राय वै नमः
नमः सहस्रपादाय सर्वपादाय वै नमः ४७

सहस्रपाणये चैव सर्वतःपाणये नमः
नमः सर्वस्य स्त्रष्ट्रे च द्रष्ट्रे सर्वस्य ते नमः ४८

आदित्यवर्णाय नमः शिरसश्छेदनाय च
सृष्टिप्रलयकर्त्रे च स्थितिकर्त्रे तथा नमः ४९

नमः सहस्रलिङ्गाय सहस्रचरणाय च
संहारलिङ्गिने चैव जललिङ्गाय वै नमः ५०

अन्तश्चराय सर्वाय प्रकृतेः प्रेरणाय च
व्यापिने सर्वसत्त्वानां पुरुषप्रेरकाय च ५१

इन्द्रियार्थविशेषाय तथा नियमकारिणे
भूतभव्याय शर्वाय नित्यं सत्त्ववदाय च ५२

त्वमेव स्रष्टा लोकानां मन्ता दाता तथा विभो
शरणागताय दान्ताय प्रसादं कर्तुमर्हसि ५३

तस्यैवं स्तुवतः सम्यग्भावेन परमेण ह
स तस्मै देवदेवेशो दिव्यं चक्षुरदात्तदा ५४

चक्षुषा तेन स तदा ब्रह्मा लोकपितामहः
विमाने सूर्यसंकाशे तेजोराशिमपश्यत ५५

तस्य मध्यात्ततो वाचं महतीं समशृणवत
गम्भीरां मधुरां युक्तामथ सम्पन्नलक्षणाम्
विशदां पुत्र पुत्रेति पूर्वं देवेन चोदिताम् ५६

संस्वेदात्पुत्र उत्पन्नो यत्तुभ्यं नीललोहितः
यच्च पूर्वं मया प्रोक्तस्त्वं तदा सुतमार्गणे ५७

मदीयो गणपो यस्ते मन्मूर्तिश्च भविष्यति
स प्राप्य परमं ज्ञानं मूढ त्वा विनयिष्यति ५८

तस्येयं फलनिष्पत्तिः शिरसश्छेदनं तव
मयैव कारिता तेन निर्वृतश्चाधुना भव ५९

तस्य चैवोत्पथस्थस्य यज्ञस्य तु महामते
शिरश्छेत्स्यत्यसावेव कस्मिंश्चित्कारणान्तरे
स्तवेनानेन तुष्टोऽस्मि किं ददानि च तेऽनघ ६०

वायुरुवाच
ततः स भगवान्हृष्टः प्रणम्य शुभया गिरा
उवाच प्राञ्जलिर्भूत्वा लक्ष्यालक्ष्यं तमीश्वरम् ६१

भगवन्नैव मे दुःखं दर्शनात्ते प्रबाधते
इच्छामि शिरसो ह्यस्य धारणं सर्वदा त्वया
ननु स्मरेयमेतच्च शिरसश्छेदनं विभो ६२

भूयश्चाधर्मकार्येभ्यस्त्वयैवेच्छे निवारणम्
तथा च कृत्यमुद्दिश्य पश्येयं त्वा यथासुखम् ६३

विज्ञप्तिं ब्रह्मणः श्रुत्वा प्रोवाच भुवनेश्वरः
स एव सुतसंज्ञस्ते मन्मूर्तिर्नीललोहितः
शिरश्छेत्स्यति यज्ञस्य बिभर्त्स्यति शिरश्च ते ६४

इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत
गते तस्मिन्महादेवे ब्रह्मा लोकपितामहः
सयज्ञः सहवेदश्च स्वं लोकं प्रत्यपद्यत ६५

वायुरुवाच
य इमं शृणुयान्मर्त्यो गुह्यं वेदार्थसंमितम्
स देहभेदमासाद्य सायुज्यं ब्रह्मणो व्रजेत् ६६

यश्चेमं पठते नित्यं ब्राह्मणानां समीपतः

स सर्वपापनिर्मुक्तो रुद्रलोके महीयते ६७

नापुत्रशिष्ययोगिभ्य इदमाख्यानमैश्वरम्
आख्येयं नापि चाज्ञाय न शठाय न मानिने ६८

इदं महद्दिव्यमधर्मशासनं पठेत्सदा ब्राह्मणवैद्यसंसदि
कृतावकाशो भवतीह मानवः शरीरभेदे प्रविशेत्पितामहम् ६९

इति स्कन्दपुराणे पञ्चमोऽध्यायः

सनत्कुमार उवाच

ततः स भगवान्देवः कपर्दी नीललोहितः
आज्ञया परमेशस्य जग्राह ब्रह्मणः शिरः १

तद्गृहीत्वा शिरो दीप्तं रूपं विकृतमास्थितः
योगक्रीडां समास्थाय भैक्षाय प्रचचार ह २

स देववेश्मनि तदा भिक्षार्थमगमद्द्विजाः
न चास्य कश्चित्तां भिक्षामनुरूपामदाद्विभोः ३

अभ्यगात्संक्रमेणैव वेश्म विष्णोर्महात्मनः
तस्यातिष्ठत स द्वारि भिक्षामुच्चारयञ्छुभाम् ४

स दृष्ट्वा तदुपस्थं तु विष्णुर्वै योगचक्षुषा
शिरां ललाटात्सम्भिद्य रक्तधारामपातयत्
पपात सा च विस्तीर्णा योजनार्धशतं तदा ५

तया पतन्त्या विप्रेन्द्रा बहून्यब्दानि धारया
पितामहकपालस्य नार्धमप्यभिपूरितम्
तमुवाच ततो देवः प्रहस्य वचनं शुभम् ६

सकृत्कन्याः प्रदीयन्ते सकृदग्निश्च जायते

सकृद्राजानो ब्रुवते सकृद्भिद्ना प्रदीयते ७

तुष्टोऽस्मि तव दानेन युक्तेनानेन मानद
वरं वरय भद्रं ते वरदोऽस्मि तवाद्य वै ८

विष्णुरुवाच
एष एव वरः श्लाघ्यो यदहं देवताधिपम्
पश्यामि शंकरं देवमुग्रं शर्वं कपर्दिनम् ९

देवश्छायां ततो वीक्ष्य कपालस्थे तदा रसे
ससर्ज पुरुषं दीप्तं विष्णोः सदृशमूर्जितम् १०

तमाहाथाक्षयश्चासि अजरामर एव च
युद्धेषु चाप्रतिद्वन्द्वी सखा विष्णोरनुत्तमः
देवकार्यकरः श्रीमान्सहानेन चरस्व च ११

नारासु जन्म यस्मात्ते विष्णुदेहोद्भवासु च
नरस्तस्माद्धि नाम्ना त्वं प्रियश्चास्य भविष्यसि १२

वायुरुवाच
तं तदाश्वास्य निक्षिप्य नरं विष्णोः स्वयं प्रभुः
अगमद्ब्रह्मसदनं तौ चाविविशतुर्गृहम् १३

य इदं नरजन्मेह शृणुयाद्वा पठेत वा
स कीर्त्या परया युक्तो विष्णुलोके महीयते १४

इति स्कन्दपुराणे षष्ठोऽध्यायः

स्कन्दपुराण ७

वायुरुवाच
ब्रह्मलोकं समासाद्य भगवान्सर्वलोकपः
भैक्ष्यं भैक्ष्यमिति प्रोच्य द्वारे समवतिष्ठत १

तं दृष्ट्वा विकृतं ब्रह्मा कपालकरभूषणम्
ज्ञात्वा योगेन महता तुष्टाव भुवनेश्वरम् २

तस्य तुष्टस्तदा देवो वरदोऽस्मीत्यभाषत
वृणीष्व वरमव्यग्रो यस्ते मनसि वर्तते ३

ब्रह्मोवाच
इच्छामि देवदेवेश त्वया चिह्नमिदं कृतम्
येन चिह्नेन लोकोऽयं चिह्नितः स्याज्जगत्पते ४

तस्य तद्वचनं श्रुत्वा भगवान्वदतां वरः
सर्वश्रुतिमयं ब्रह्म ओमिति व्याजहार ह ५

शम्भोर्व्याहारमात्रेण वागियं दिव्यरूपिणी
निःसृता वदनाद्देवी प्रह्वा समवतिष्ठत ६

तामुवाच तदा देवो वाचा संजीवयन्निव
यस्मात्त्वमक्षरो भूत्वा मम वाचो विनिःसृता
सर्वविद्याधिदेवी त्वं तस्माद्देवि भविष्यसि ७

यस्माद्ब्रह्मसरश्चेदं मुखं मम समाश्रिता
तस्मात्सरस्वतीत्येव लोके ख्यातिं गमिष्यसि ८

इमं लोकं वराम्भोभिः पावयित्वा च सुप्रभे
सर्वाँल्लोकांस्तारयित्री पुनस्त्वं नात्र संशयः ९

यज्ञभागं च देवास्ते दास्यन्ति सपितामहाः
पुण्या च सर्वसरितां भविष्यसि न संशयः १०

ततः सा समनुज्ञाता शंकरेण विभाविनी
चक्रे ब्रह्मसरः पुण्यं ब्रह्मलोकेऽतिपावनम् ११

तोयामृतसुसम्पूर्णं स्वर्णपद्मोपशोभितम्
नानापक्षिगणाकीर्णं मीनसंक्षोभितोदकम्
ततो विनिःसृता भूयः सेमं लोकमपावयत् १२

तं गृहीत्वा महादेवः कपालममितौजसम्
इमं लोकमनुप्राप्य देशे श्रेष्ठेऽवतिष्ठत १३

तत्र तच्च महद्दिव्यं कपालं देवताधिपः
स्थापयामास दीप्तार्चिर्गणानामग्रतः प्रभुः १४

तत्स्थापितमथो दृष्ट्वा गणाः सर्वे महात्मनः
अनदन्सुमहानादं नादयन्तो दिशो दश
क्षुब्धार्णवाशनिप्रख्यं नभो येन व्यशीर्यत १५

तेन शब्देन घोरेण असुरो देवकण्टकः
हालाहल इति ख्यातस्तं देशं सोऽभ्यगच्छत १६

अमृष्यमाणः क्रोधान्धो दुरात्मा यज्ञनाशकः
ब्रह्मदत्तवरश्चैव अवध्यः सर्वजन्तुभिः
महिषश्छन्नरूपाणामसुराणां शतैर्वृतः १७

तमापतन्तं सक्रोधं महिषं देवकण्टकम्
सम्प्रेक्ष्याह गणाध्यक्षो गणान्सर्वान्पिनाकिनः १८

दैत्योऽयं गणपा दुष्टस्त्रैलोक्यसुरकण्टकः
आयाति त्वरितो यूयं तस्मादेनं निहन्यथ १९

ततस्ते गणपाः सर्वे समायान्तं सुरद्विषम्
भित्त्वा शूलेन संक्रुद्धा विगतासुं च चक्रिरे २०

हते तस्मिंस्तदा देवो दिशः सर्वा अवैक्षत

ताभ्यः पिशाचा वृत्तास्याः पिशाच्यश्च महाबलाः
अभ्यगच्छन्त देवेशं ताभ्यस्तं विनिवेदयत् २१

स ताभिरुपयुक्तश्च विनियुक्तश्च सर्वशः
तमेव चाप्यथावासं देवादिष्टं प्रपेदिरे २२

भक्षयन्ति स्म महिषं मित्वा मित्वा यतस्तु ताः
कपालमातरः प्रोक्तास्तस्माद्देवेन धीमता २३

कपालं स्थापितं यस्मात्तस्मिन्देशे पिनाकिना
महाकपालं तत्तस्मात्त्रिषु लोकेषु गद्यते २४

स्थापितस्य कपालस्य यथोक्तमभवत्तदा
ख्यातं शिवतडागं तत्सर्वपापप्रमोचनम् २५

आगत्याथ ततो ब्रह्मा देवतानां गणैर्वृतः
कपर्दिनमुपामन्त्र्य तं देशं सोऽन्वगृह्णत २६

अर्धयोजनविस्तीर्णं क्षेत्रमेतत्समन्ततः
भविष्यति न संदेहः सिद्धक्षेत्रं महात्मनः २७

श्मेति हि प्रोच्यते पापं क्षयं शानं विदुर्बुधाः
ध्यानेन नियमैश्चैव श्मशानं तेन संज्ञितम्
गुह्यं देवातिदेवस्य परं प्रियमनुत्तमम् २८

एवं तत्र नरः पापं सर्वमेव प्रहास्यति
त्रिरात्रोपोषितश्चैव अर्चयित्वा वृषध्वजम्
राजसूयाश्वमेधाभ्यां फलं यत्तदवाप्स्यति २९

यश्च प्राणान्प्रियांस्तत्र परित्यक्ष्यति मानवः
स गुह्यगणदेवानां समतां समवाप्स्यति ३०

वायुरुवाच

ततः स तत्र संस्थाप्य देवस्यार्चाद्वयं शुभम्
शूलेश्वरं महाकायं रुद्रस्यायतनं शुभम् ३१

तत्राभिगमनादेव कृत्वा पापस्य संक्षयम्
रुद्रलोकमवाप्नोति स प्राहैवं पितामहः ३२

यत्र चापि शिरस्तस्य चिच्छेद भुवनेश्वरः
कश्मीरः सोऽभवन्नाम्ना देशः पुण्यतमः सदा ३३

ततो देवः सह गणै रूपं विकृतमास्थितः
पश्यतां सर्वदेवानामन्तर्धानमगात्प्रभुः ३४

गते च देवनाथेऽथ कपालस्थानमव्ययम्
सर्वतीर्थाभिषेकस्य फलेन समयोजयत् ३५

तदद्यापि महद्दिव्यं सरस्तत्र प्रदृश्यते
महाकपालं विप्रेन्द्राः स्वर्गास्तत्राक्षयाः स्मृताः ३६

इदं शुभं दिव्यमधर्मनाशनं महाफलं सेन्द्रसुरासुरार्चितम्
महाकपालं प्रकृतोपदर्शनं सुरेशलोकादिविगाहने हितम् ३७

तपोधनैः सिद्धगणैश्च संस्तुतं दिविष्ठतुल्यद्विजराजमण्डले
पठेन्नरो यः शृणुयाच्च सर्वदा त्रिपिष्टपं गच्छति सोऽभिनन्दितः ३८

इति स्कन्दपुराणे सप्तमोऽध्यायः

## स्कन्दपुराण ८

वायुरुवाच

एवमेषा भगवती ब्रह्मलोकानुसारिणी
युष्माकं धर्मसिद्ध्यर्थं वेदीमध्याद्व्यवर्तत १

सनत्कुमार उवाच
एवं तेषां समाप्तेऽथ सत्त्रे वर्षसहस्रिके
प्रवृत्तायां सरस्वत्यामगात्तत्र पितामहः २

ब्रह्मोवाच
भूयोऽन्येन ह सत्त्रेण यजध्वं देवमीश्वरम्
यदा वो भविता विघ्नं तदा निष्कल्मषं तपः ३

विघ्नं तच्चैव संतीर्य तपस्तप्त्वा च भास्वरम्
योगं प्राप्य महद्युक्तास्ततो द्रक्ष्यथ शंकरम् ४

तथेत्युक्त्वा गते तस्मिन्सत्त्राण्याजह्रिरे तदा
बहूनि विविधाकाराण्यभियुक्ता महाव्रताः ५

निःसोमां पृथिवीं कृत्वा कृत्स्नामेतां ततो द्विजाः
राजानं सोममानाय्य अभिषेक्तुमियेषिरे ६

अथ सोऽपि कृतातिथ्यः अदृश्येन दुरात्मना
स्वर्भानुना हृतः सोमस्ततस्ते दुःखिताभवन् ७

ते गत्वा मुनयः सर्वे कलापग्रामवासिनः
पुरूरवसमानीय राजानं तेऽभ्यषेचयन् ८

ऊचुश्चैनं महाभागा हृतः सोमो हि नः प्रभो
केनापि तद्भवान्द्विप्रमिहानयतु मा चिरम् ९

स एवमुक्तो मृगयन्न तमासादयत्प्रभुः
उवाच स तदा विप्रान्प्रणम्य भयपीडितः १०

परमं यत्नमास्थाय मया सोमोऽभिमार्गितः
न च तं वेद्मि केनासौ क्व वा नीत इति प्रभुः ११

तमेवंवादिनं क्रुद्धा ऋषयः संशितव्रताः
ऊचुः सर्वे सुसंरब्धा इलापुत्रं महामतिम् १२

भवान्राजा कुतस्त्राता कृतोऽस्माभिर्भयार्दितैः
न च नस्तद्भयं शक्तो विनाशयितुमाश्वपि १३

विषयेष्वतिसक्तात्मा योगात्तं नानुपश्यसि
तस्माद्विरोधमास्थाय द्विजेभ्यो वधमाप्स्यसि १४

वयमेव हि राजानमानयिष्याम दुर्विदम्
तपसा स्वेन राजेन्द्र पश्य नो बलमुत्तमम् १५

ततस्ते ऋषयः सर्वे तपसा दग्धकिल्बिषाः
अस्तुवन्वाग्भिरिष्टाभिर्गायत्रीं वेदभाविनीम् १६

स्तुवतां तु ततस्तेषां गायत्री वेदभाविनी
रूपिणी दर्शनं प्रादादुवाचेदं च तान्द्विजान् १७

तुष्टास्मि वत्साः किं वोऽद्य करोमि वरदास्मि वः
ब्रूत तत्कृतमेवेह भविष्यति न संशयः १८

ऋषय ऊचुः
सोमो नोऽपहृतो देवि केनापि सुदुरात्मना
तमानय नमस्तेऽस्तु एष नो वर उत्तमः १९

सनत्कुमार उवाच
सा तथोक्ता विनिश्चित्य दृष्ट्वा दिव्येन चक्षुषा
श्येनीभूता जगामाशु स्वर्भानुमसुरं प्रति २०

व्यग्राणामसुराणां सा गृहीत्वा सोममागता
आगम्य तानृषीन्प्राह अयं सोमोऽभिषूयताम् २१

ते तमासाद्य ऋषयः प्राप्य यज्ञफलं महत्
अमन्यन्त तपोऽस्माकं निष्कल्मषमिति द्विजाः २२

ततस्तत्र स्वयं ब्रह्मा सह देवोरगादिभिः
आगत्य तानृषीन्प्राह तपः कुरुत मा चिरम् २३

ते सह ब्रह्मणा गत्वा मैनाकं पर्वतोत्तमम्
सर्वैर्देवगणैः सार्धं तपश्चेरुः समाहिताः २४

तेषां कालेन महता तपसा भावितात्मनाम्
योगप्रवृत्तिरभवत्सूक्ष्मयुक्तास्ततस्तु ते २५

ते युक्ता ब्रह्मणा सार्धमृषयः सह देवतैः
महेश्वरे मनः स्थाप्य निश्चलोपलवत्स्थिताः २६

अथ तेषां महादेवः पिनाकी नीललोहितः
अभ्यगच्छत तं देशं विमानेनार्कतेजसा २७

तद्भावभाविताञ्ज्ञात्वा सद्भावेन परेण ह
उवाच मेघनिर्ह्रादः शतदुन्दुभिनिस्वनः २८

भो भो सब्रह्मका देवाः सविष्णुऋषिचारणाः
दिव्यं चक्षुः प्रयच्छामि पश्यध्वं मां यथेप्सितम् २९

सनत्कुमार उवाच
अपश्यन्त ततः सर्वे सूर्यायुतसमप्रभम्
विमानं मेरुसंकाशं नानारत्नविभूषितं ३०

तस्य मध्येऽग्निकूटं च सुमहद्दीप्तिमास्थितम्
ज्वालामालापरिक्षिप्तमर्चिभिरुपशोभितम् ३१

दंष्ट्राकरालवदनं प्रदीप्तानललोचनम्
त्रेताग्निपिङ्गलजटं भुजगाबद्धमेखलम् ३२

मृष्टकुण्डलिनं चैव शूलासक्तमहाकरम्
पिनाकिनं दण्डहस्तं मुद्गराशनिपाणिनम् ३३

असिपट्टिसहस्तं च चक्रिणं चोर्ध्वमेहनम्
अक्षसूत्रकरं चैव दुष्प्रेक्ष्यमकृतात्मभिः
चन्द्रादित्यग्रहैश्चैव कृतस्रगुपभूषणम् ३४

तमपश्यन्त ते सर्वे देवा दिव्येन चक्षुषा
यं दृष्ट्वा न भवेन्मृत्युर्मर्त्यस्यापि कदाचन ३५

तपसा विनियोगयोगिनः प्रणमन्तो भवमिन्दुनिर्मलम्
वियतीश्वरदत्तचक्षुषः सह देवैर्मुनयो मुदान्विताः ३६

प्रसमीक्ष्य महासुरेशकालं मनसा चापि विचार्य दुर्विसह्यम्
प्रणमन्ति गतात्मभावचिन्ताः सह देवैर्जगदुद्भवं स्तुवन्तः ३७

इति स्कन्दपुराणे अष्टमोऽध्यायः

## स्कन्दपुराण ९

सनत्कुमार उवाच
ते दृष्ट्वा देवदेवेशं सर्वे सब्रह्मकाः सुराः
अस्तुवन्वाग्भिरिष्टाभिः प्रणम्य वृषवाहनम् १

पितामह उवाच
नमः शिवाय सोमाय भक्तानां भयहारिणे
नमः शूलाग्रहस्ताय कमण्डलुधराय च २

दण्डिने नीलकण्ठाय करालदशनाय च
त्रेताग्निदीप्तनेत्राय त्रिनेत्राय हराय च ३

नमः पिनाकिने चैव नमोऽस्त्वशनिधारिणे
व्यालयज्ञोपवीताय कुण्डलाभरणाय च ४

नमश्चक्रधरायैव व्याघ्रचर्मधराय च
कृष्णाजिनोत्तरीयाय सर्पमेखलिने तथा ५

वरदात्रे च रुद्राय सरस्वतीसृजे तथा
सोमसूर्याग्निमालाय अक्षसूत्रकराय च ६

ज्वालामालासहस्राय ऊर्ध्वलिङ्गाय वै नमः
नमः पर्वतवासाय शिरोहर्त्रे च मे पुरा ७

हालाहलविनाशाय कपालवरधारिणे
विमानवरवाहाय जनकाय ममैव च
वरदाय वरिष्ठाय श्मशानरतये नमः ८

नमो नरस्य कर्त्रे च स्थितिकर्त्रे नमः सदा
उत्पत्तिप्रलयानां च कर्त्रे सर्वसहाय च ९

ऋषिदैवतनाथाय सर्वभूताधिपाय च
शिवः सौम्यश्च देवेश भव नो भक्तवत्सल १०

सनत्कुमार उवाच
ब्रह्मण्यथैवं स्तुवति देवदेवः स लोकपः
उवाच तुष्टस्तान्देवानृषींश्च तपसैधितान् ११

तुष्टोऽस्म्यनेन वः सम्यक्तपसा ऋषिदेवताः
वरं ब्रूत प्रदास्यामि सुनिश्चिन्त्य स उच्यताम् १२

सनत्कुमार उवाच
अथ सर्वानभिप्रेक्ष्य संतुष्टांस्तपसैधितान्

दर्शनेनैव विप्रेन्द्र ब्रह्मा वचनमब्रवीत् १३

ब्रह्मोवाच
यदि तुष्टोऽसि देवेश यदि देयो वरश्च नः
तस्माच्छिवश्च सौम्यश्च दृश्यश्चैव भवस्व नः १४

सुखसंव्यवहार्यश्च नित्यं तुष्टमनास्तथा
सर्वकार्येषु च सदा हितः पथ्यश्च शंकरः १५

सह देव्या ससूनुश्च सह देवगणैरपि
एष नो दीयतां देव वरो वरसहस्रद १६

सनत्कुमार उवाच
एवमुक्तः स भगवान्ब्रह्मणा देवसत्तमः
स्वकं तेजो महद्दिव्यं व्यसृजत्सर्वयोगवित् १७

अर्धेन तेजसः स्वस्य मुखादुल्कां ससर्ज ह
तामाह भव नारीति भगवान्विश्वरूपधृक् १८

साकाशं द्यां च भूमिं च महिम्ना व्याप्य विष्ठिता
उपतस्थे च देवेशं दीप्यमाना यथा तडित् १९

तामाह प्रहसन्देवो देवीं कमललोचनाम्
ब्रह्माणं देवि वरदमाराधय शुचिस्मिते २०

सा तथेति प्रतिज्ञाय तपस्तप्तुं प्रचक्रमे
रुद्रश्च तानृषीनाह शृणुध्वं मम तोषणे
फलं फलवतां श्रेष्ठा यद्ब्रवीमि तपोधनाः २१

अमरा जरया त्यक्ता अरोगा जन्मवर्जिताः
मद्भक्तास्तपसा युक्ता इहैव च निवत्स्यथ २२

अयं चैवाश्रमः श्रेष्ठः स्वर्णशृङ्गोऽचलोत्तमः
पुण्यं पवित्रं स्थानं वै भविष्यति न संशयः २३

मैनाके पर्वते श्रेष्ठे स्वर्णोऽहमभवं यतः
स्वर्णाक्षीं चासृजं देवीं स्वर्णाक्षं तेन तत्स्मृतम् २४

स्वर्णाक्षे ऋषयो यूयं षट्कुलीयास्तपोधनाः
निवत्स्यथ मयाज्ञप्ताः स्वर्णाक्षं वै ततश्च ह
समन्ताद्योजनं क्षेत्रं पवित्रं तन्न संशयः २५

देवगन्धर्वचरितमप्सरोगणसेवितम्
सिंहेभशरभाकीर्णं शार्दूलर्क्षमृगाकुलम्
अनेकविहगाकीर्णं लतावृक्षक्षुपाकुलम् २६

ब्रह्मचारी नियमवाञ्जितक्रोधो जितेन्द्रियः
उपोष्य त्रिगुणां रात्रिं चरुं कृत्वा निवेद्य च
यत्र तत्र मृतः सोऽपि ब्रह्मलोके निवत्स्यति २७

योऽप्येवमेव कामात्मा पश्येत्तत्र वृषध्वजम्
गोसहस्रफलं सोऽपि मत्प्रसादादवाप्स्यति
नियमेन मृतश्चात्र मया सह चरिष्यति २८

यावत्स्थास्यन्ति लोकाश्च मैनाकश्चाप्ययं गिरिः
तावत्सह मया देवा मत्प्रसादाच्चरिष्यथ २९

एवं स तानृषीनुक्त्वा दृष्ट्वा सौम्येन चक्षुषा
पश्यतामेव सर्वेषां तत्रैवान्तरधीयत ३०

सनत्कुमार उवाच
य इमं शृणुयान्मर्त्यो द्विजातीञ्छ्रावयेत वा
सोऽपि तत्फलमासाद्य चरेन्मृत्युविवर्जितः ३१

जयति जलदवाहः सर्वभूतान्तकालः शमदमनियतानां क्लेशहर्ता यतीनाम्
जननमरणहर्ता चेष्टतां धार्मिकाणां विविधकरणयुक्तः खेचरः पादचारी ३२

मदनपुरविदारी नेत्रदन्तावपाती विगतभयविषादः सर्वभूतप्रचेताः
सततमभिदधानश्चेकितानात्मचित्तः करचरणललामः सर्वदृग्देवदेवः ३३

इति स्कन्दपुराणे नवमोऽध्यायः

स्कन्दपुराण १०

सनत्कुमार उवाच
सा देवी त्र्यम्बकप्रोक्ता ततापः सुचिरं तपः
निराहारा कदाचिच्च एकपर्णाशना पुनः
वाय्वाहारा पुनश्चापि अब्भक्षा भूय एव च १

तां तपश्चरणे युक्तां ब्रह्मा ज्ञात्वातिभास्वराम्
उवाच ब्रूहि तुष्टोऽस्मि देवि किं करवाणि ते २

साब्रवीत् त्र्यम्बकं देवं पतिं प्राप्येन्दुवर्चसम्
विचरेयं सुखं देव सर्वाल्लोकान्नमस्तव ३

ब्रह्मोवाच
न हि येन शरीरेण क्रियते परमं तपः
तेनैव परमेशोऽसौ पतिः शम्भुरवाप्यते ४

तस्माद्धि योगाद्भवती दक्षस्येह प्रजापतेः
जायस्व दुहिता भूत्वा पतिं रुद्रमवाप्स्यसि ५

ततः सा तद्वचः श्रुत्वा योगाद्देवी मनस्विनी
दक्षस्य दुहिता जज्ञे सती नामातियोगिनी ६

तां दक्षस्त्र्यम्बकायैव ददौ भार्यामनिन्दिताम्
ब्रह्मणो वचनाद्यस्यां मानसानसृजत्सुतान् ७

आत्मतुल्यबलान्दीप्ताञ्जरामरणवर्जितान्
अनेकानि सहस्राणि रुद्राणाममितौजसाम्  ८

तान्दृष्ट्वा सृज्यमानांश्च ब्रह्मा तं प्रत्यषेधयत्
मा स्राक्षीर्देवदेवेश प्रजा मृत्युविवर्जिताः  ९

अन्याः सृजस्व भद्रं ते प्रजा मृत्युसमन्विताः
तेन चोक्तं स्थितोऽस्मीति स्थाणुस्तेन ततः स्मृतः  १०

देव उवाच
न स्रक्ष्ये मृत्युसंयुक्ताः प्रजा ब्रह्मन्कथंचन
स्थितोऽस्मि वचनात्तेऽद्य वक्तव्यो नास्मि ते पुनः  ११

ये त्विमे मानसाः सृष्टा महात्मानो महाबलाः
चरिष्यन्ति मया सार्धं सर्व एते हि याज्ञिकाः  १२

सनत्कुमार उवाच
अथ काले गते व्यास स दक्षः शापकारणात्
अन्यानाहूय जामातृन्सदारानर्चयद्गृहे  १३

सतीं सह त्र्यम्बकेन नाजुहाव रुषान्वितः
सती ज्ञात्वा तु तत्सर्वं गत्वा पितरमब्रवीत्  १४

अहं ज्येष्ठा वरिष्ठा च जामात्रा सह सुव्रत
मां हित्वा नार्हसे ह्येताः सह भर्तृभिरर्चितुम्  १५

क्रोधेनाथ समाविष्टः स क्रोधोपहतेन्द्रियः
निरीक्ष्य प्राब्रवीद्दक्षश्चक्षुषा निर्दहन्निव  १६

मामेताः सति सस्नेहाः पूजयन्ति सभर्तृकाः
न त्वं तथा पूजयसे सह भर्त्रा महाव्रते  १७

गृहांश्च मे सपत्नीकाः प्रविशन्ति तपोधनाः
श्रेष्ठांस्तस्मात्सदा मन्ये ततस्तानर्चयाम्यहम् १८

तस्माद्यत्ते करोम्यद्य शुभं वा यदि वाशुभम्
पूजां गृहाण तां पुत्रि गच्छ वा यत्र रोचते १९

सनत्कुमार उवाच
ततः सा क्रोधदीप्तास्या न जग्राहातिकोपिता
पूजामसंमतां हीनामिदं चोवाच तं शुभा २०

यस्मादसंमतामेतां पूजां त्वं कुरुषे मयि
श्लाघ्यां चैवाप्यदुष्टां च श्रेष्ठां मां गर्हसे पितः २१

तस्मादिमं स्वकं देहं त्यजाम्येषा तवात्मजा
असत्कृतायाः किं मेऽद्य जीवितेनाशुभेन ह २२

सनत्कुमार उवाच
ततः कृत्वा नमस्कारं मनसा त्र्यम्बकाय ह
उवाचेदं सुसंरब्धा वचनं वचनारणिः २३

यत्राहमुपपद्येयं पुनर्देहे स्वयेच्छया
एवं तत्राप्यसंमूढा सम्भूता धार्मिका सती
गच्छेयं धर्मपत्नीत्वं त्र्यम्बकस्यैव धीमतः २४

ततः सा धारणां कृत्वा आग्नेयीं सहसा सती
ददाह वै स्वकं देहं स्वसमुत्थेन वह्निना २५

तां ज्ञात्वा त्र्यम्बको देवीं तथाभूतां महायशाः
उवाच दक्षं संगम्य इदं वचनकोविदः २६

यस्मात्ते निन्दितश्चाहं प्रशस्ताश्चेतरे पृथक्

जामातरः सपत्नीकास्तस्माद्वैवस्वतेऽन्तरे
उत्पत्स्यन्ते पुनर्यज्ञे तव जामातरस्त्विमे २७

त्वं चैव मम शापेन क्षत्रियो भविता नृपः
प्रचेतसां सुतश्चैव कन्यायां शाखिनां पुनः
धर्मविघ्नं च ते तत्र करिष्ये क्रूरकर्मणः २८

सनत्कुमार उवाच
तमुवाच तदा दक्षो दूयता हृदयेन वै
मया यदि सुता स्वा वै प्रोक्ता त्यक्तापि वा पुनः
किं तवात्र कृतं देव अहं तस्याः प्रभुः सदा २९

यस्मात्त्वं मामभ्यशपस्तस्मात्त्वमपि शंकर
भूर्लोके वत्स्यसे नित्यं न स्वर्लोके कदाचन ३०

भागं च तव यज्ञेषु दत्त्वा सर्वे द्विजातयः
अपः स्प्रक्ष्यन्ति सर्वत्र महादेव महाद्युते ३१

सनत्कुमार उवाच
ततः स देवः प्रहसंस्तमुवाच त्रिलोचनः
सर्वेषामेव लोकानां मूलं भूर्लोक उच्यते ३२

तमहं धारयाम्येको लोकानां हितकाम्यया
भूर्लोके हि धृते लोकाः सर्वे तिष्ठन्ति शाश्वताः
तस्मात्तिष्ठाम्यहं नित्यमिहैव न तवाज्ञया ३३

भागान्दत्त्वा तथान्येभ्यो दित्सवो मे द्विजातयः
अपः स्पृशन्ति शुद्ध्यर्थं भागं यच्छन्ति मे ततः
दत्त्वा स्पृशन्ति भूयश्च धर्मस्यैवाभिवृद्धये ३४

यथा हि देवनिर्माल्यं शुचयो धारयन्त्युत

अशुचिं स्प्रष्टुकामाश्च त्यक्त्वापः संस्पृशन्ति च ३५

देवानामेवमन्येषां दित्सवो ब्राह्मणर्षभाः
भागानपः स्पृशन्ति स्म तत्र का परिदेवना ३६

त्वं तु मच्छापनिर्दग्धो विपरीतो नराधमः
स्वस्यां सुतायां मूढात्मा पुत्रमुत्पादयिष्यसि ३७

सनत्कुमार उवाच
एवं स भगवाञ्छप्त्वा दक्षं देवो जगत्पतिः
विरराम महातेजा जगाम च यथागतम् ३८

चन्द्रदिवाकरवह्निसमाक्षं चन्द्रनिभाननपद्मदलाक्षम्
गोवृषवाहममेयगुणौघं सततमिहेन्दुवहं प्रणताः स्मः ३९

य इमं दक्षशापाङ्कं देव्याश्चैवाशरीरताम्
शृणुयाद्वाथ विप्रान्वा श्रावयीत यतव्रतः
सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ४०

इति स्कन्दपुराणे दशमोऽध्यायः

सनत्कुमार उवाच
कदाचित्स्वगृहं प्राप्तं कश्यपं द्विपदां वरम्
अपृच्छद्धिमवान्प्रश्नं लोके ख्यातिकरं नु किम् १

केनाक्षयाश्च लोकाः स्युः ख्यातिश्च परमा मुने
तथैव चार्चनीयत्वं सत्सु तं कथयस्व मे २

कश्यप उवाच
अपत्येन महाबाहो सर्वमेतदवाप्यते
मम ख्यातिरपत्येन ब्रह्मणो ऋषिभिश्च ह ३

किं न पश्यसि शैलेन्द्र यतो मां परिपृच्छसि
वर्तयिष्यामि तच्चापि यन्मे दृष्टं पुराचल ४

वाराणसीमहं गच्छन्नपश्यं संस्थितं दिवि
विमानं स्वनवद्दिव्यमनौपम्यमनिन्दितम् ५

तस्याधस्तादार्तनादं गर्तास्थाने शृणोम्यहम्
तानहं तपसा ज्ञात्वा तत्रैवान्तर्हितः स्थितः ६

अथागात्तत्र शैलेन्द्र विप्रो नियमवाञ्छुचिः
तीर्थाभिषेकपूतात्मा परे तपसि संस्थितः ७

अथ स व्रजमानस्तु व्याघ्रेणाभीषितो द्विजः
विवेश तं तदा देशं सा गर्ता यत्र भूधर ८

गर्तायां वीरणस्तम्बे लम्बमानांस्तदा मुनीन्
अपश्यदार्तो दुःखार्तानपृच्छत्तांश्च स द्विजः ९

के यूयं वीरणस्तम्बे लम्बमाना ह्यधोमुखाः
दुःखिताः केन मोक्षश्च युष्माकं भवितानघाः १०

पितर ऊचुः
वयं तेऽकृतपुण्यस्य पितरः सपितामहाः
प्रपितामहाश्च क्लिश्यामस्तव दुष्टेन कर्मणा ११

नरकोऽयं महाभाग गर्तारूपं समास्थितः
त्वं चापि वीरणस्तम्बस्त्वयि लम्बामहे वयम् १२

यावत्त्वं जीवसे विप्र तावदेव वयं स्थिताः
मृते त्वयि गमिष्यामो नरकं पापचेतसः १३

यदि त्वं दारसंयोगं कृत्वापत्यं गुणोत्तरम्
उत्पादयसि तेनास्मान्मुच्येम वयमेकशः १४

नान्येन तपसा पुत्र न तीर्थानां फलेन च
तत्कुरुष्व महाबुद्धे तारयस्व पितॄन्भयात् १५

स तथेति प्रतिज्ञाय आराध्य च वृषध्वजम्
पितॄन्गर्तात्समुद्धृत्य गणपान्प्रचकार ह १६

स्वयं च रुद्रदयितः सुकेशो नाम नामतः
संमतो बलवांश्चैव रुद्रस्य गणपोऽभवत् १७

तस्मात्कृत्वा तपो घोरमपत्यं गुणवत्तरम्
उत्पादयस्व शैलेन्द्र ततः कीर्तिमवाप्स्यसि १८

सनत्कुमार उवाच
स एवमुक्तो ऋषिणा शैलेन्द्रो नियमे स्थितः
तपश्चकार विपुलं येन ब्रह्मा तुतोष ह १९

तमागत्य तदा ब्रह्मा वरदोऽस्मीत्यभाषत
ब्रूहि तुष्टोऽस्मि ते शैल तपसानेन सुव्रत २०

हिमवानुवाच
भगवन्पुत्रमिच्छामि गुणैः सर्वैरलंकृतम्
एतद्वरं प्रयच्छस्व यदि तुष्टोऽसि नः प्रभो २१

ब्रह्मोवाच
कन्या भवित्री शैलेन्द्र सुता ते वरवर्णिनी
यस्याः प्रभावात्सर्वत्र कीर्तिमाप्स्यसि पुष्कलाम् २२

अर्चितः सर्वदेवानां तीर्थकोटीसमावृतः

पावनश्चैव पुण्यश्च देवानामपि सर्वतः
ज्येष्ठा च सा भवित्री ते अन्ये चानु ततः शुभे २३

सनत्कुमार उवाच
एवमुक्त्वा ततो ब्रह्मा तत्रैवान्तरधीयत
सोऽपि कालेन शैलेन्द्रो मेनायामुपपादयत्
अपर्णामेकपर्णां च तथा चाप्येकपाटलाम् २४

न्यग्रोधमेकपर्णा तु पाटलं चैकपाटला
आश्रिते द्वे अपर्णा तु अनिकेता तपोऽचरत्
शतं वर्षसहस्राणां दुश्चरं देवदानवैः २५

आहारमेकपर्णेन सैकपर्णा समाचरत्
पाटलेन तथैकेन विदधात्येकपाटला २६

पूर्णे पूर्णे सहस्रे तु आहारं तेन चक्रतुः
अपर्णा तु निराहारा तां माता प्रत्यभाषत
निषेधयन्ती ह्यु मेति मातृस्नेहेन दुःखिता २७

सा तथोक्ता तदा मात्रा देवी दुश्चरचारिणी
तेनैव नाम्ना लोकेषु विख्याता सुरपूजिता २८

एतत्तत्त्रिकुमारीणां जगत्स्थावरजङ्गमम्
एतासां तपसा लब्धं यावद्भूमिर्धरिष्यति २९

तपःशरीरास्ताः सर्वास्तिस्रो योगबलान्विताः
सर्वाश्चैव महाभागाः सर्वाश्च स्थिरयौवनाः ३०

ता लोकमातरश्चैव ब्रह्मचारिण्य एव च
अनुगृह्णन्ति लोकांश्च तपसा स्वेन सर्वदा ३१

उमा तासां वरिष्ठा च श्रेष्ठा च वरवर्णिनी
महायोगबलोपेता महादेवमुपस्थिता ३२

दत्तकश्चोशना तस्याः पुत्रः स भृगुनन्दनः
असितस्यैकपर्णा तु देवलं सुषुवे सुतम् ३३

या तु तासां कुमारीणां तृतीया ह्येकपाटला
पुत्रं शतशलाकस्य जैगीषव्यमुपस्थिता
तस्यापि शङ्खलिखितौ स्मृतौ पुत्रावयोनिजौ ३४

उमा तु या मया तुभ्यं कीर्तिता वरवर्णिनी
अथ तस्यास्तपोयोगात्त्रैलोक्यमखिलं तदा
प्रधूपितं समालक्ष्य ब्रह्मा वचनमब्रवीत् ३५

ब्रह्मोवाच
देवि किं तपसा लोकांस्तापयस्यतिशोभने
त्वया सृष्टमिदं विश्वं मा कृत्वा तद्विनाशय ३६

त्वं हि धारयसे लोकानिमान्सर्वान्स्वतेजसा
ब्रूहि किं ते जगन्मातः प्रार्थितं सम्प्रसीद नः ३७

देव्युवाच
यदर्थं तपसो ह्यस्य चरणं मे पितामह
जानीषे तत्त्वमेतन्मे ततः पृच्छसि किं पुनः ३८

ब्रह्मोवाच
यदर्थं देवि तपसा श्राम्यसे लोकभावनि
स त्वां स्वयं समागम्य इहैव वरयिष्यति ३९

सर्वदेवपतिः श्रेष्ठः सर्वलोकेश्वरेश्वरः
वयं सदेवा यस्येशे वश्याः किंकरवादिनः ४०

स देवदेवः परमेश्वरेश्वरः स्वयं तवायास्यति लोकपोऽन्तिकम्
उदाररूपो विकृताभिरूपवान्समानरूपो न हि यस्य कस्यचित्  ४१

महेश्वरः पर्वतलोकवासी चराचरेशः प्रथमोऽप्रमेयः
विनेन्दुना इन्दुसमानवक्त्रो विभीषणं रूपमिहास्थितोऽग्रम्  ४२

इति स्कन्दपुराणे एकादशोऽध्यायः

## स्कन्दपुराण १२

सनत्कुमार उवाच
ततः स भगवान्देवो ब्रह्मा तामाह सुस्वरम्
देवि येनैव सृष्टासि मनसा यस्त्वया वृतः
स भर्ता तव देवेशो भविता मा तपः कृथाः  १

ततः प्रदक्षिणं कृत्वा ब्रह्मा व्यास गिरेः सुताम्
जगामादर्शनं तस्याः सा चापि विरराम ह  २

सा देवी युक्तमित्येवमुक्त्वा स्वस्याश्रमस्य ह
द्वारि जातमशोकं वै समुपाश्रित्य संस्थिता  ३

अथागाच्चन्द्रतिलकस्त्रिदशार्तिहरो हरः
विकृतं रूपमास्थाय ह्रस्वो बाहुक एव च  ४

विभुग्ननासिको भूत्वा कुब्जः केशान्तपिङ्गलः
उवाच विकृतास्यश्च देवि त्वां वरयाम्यहम्  ५

अथोमा योगसंसिद्धा ज्ञात्वा शंकरमागतम्
अन्तर्भावविशुद्धा सा क्रियानुष्ठानलिप्सया  ६

तमुवाचार्घ्यमानाय्य मधुपर्केण चैव हि
सम्पूज्य ससुखासीनं ब्राह्मणं ब्राह्मणप्रिया  ७

देव्युवाच
भगवन्नस्वतन्त्रास्मि पिता मेऽस्त्यरणी तथा
तौ प्रभू मम दाने वै कन्याहं द्विजपुंगव ८

गत्वा याचस्व पितरं मम शैलेन्द्रमव्ययम्
स चेद्ददाति मां विप्र तुभ्यं तद्रुचितं मम ९

सनत्कुमार उवाच
ततः स भगवान्देवस्तथैव विकृतः प्रभुः
उवाच शैलराजं तमुमां मे यच्छ शैलराट् १०

स तं विकृतरूपेण ज्ञात्वा रुद्रमथाव्ययम्
भीतः शापाच्च विमना इदं वचनमब्रवीत् ११

भगवन्नावमन्यामि ब्राह्मणान्भूमिदैवतान्
मनीषितं तु यत्पूर्वं तच्छृणुष्व महातपः १२

स्वयंवरो मे दुहितुर्भविता विप्रपूजितः
वरयेद्यं स्वयं तत्र स भर्तास्या भवेदिति १३

सनत्कुमार उवाच
तच्छ्रुत्वा शैलवचनं भगवान्गोवृषध्वजः
देव्याः समीपमागत्य इदमाह महामनाः १४

देवि पित्रा तवाज्ञप्तः स्वयंवर इति श्रुतम्
तत्र त्वं वरयित्री यं स ते भर्ता किलानघे १५

तदापृच्छे गमिष्यामि दुर्लभा त्वं वरानने
रूपवन्तं समुत्सृज्य वृणीथा मादृशं कथम् १६

सनत्कुमार उवाच

तेनोक्ता सा तदा तत्र भावयन्ती तदीरितम्
भावं च रुद्रनिहितं प्रसादं मनसस्तथा १७

सम्प्राप्योवाच देवेशं मा ते भूद्बुद्धिरन्यथा
अहं त्वां वरयिष्यामि नान्यद्भूतं कथंचन १८

अथ वा तेऽस्ति संदेहो मयि विप्र कथंचन
इहैव त्वां महाभाग वरयामि मनोरथम् १९

सनत्कुमार उवाच
गृहीत्वा स्तबकं सा तु हस्ताभ्यां तत्र संस्थितम्
स्कन्धे शम्भोः समादाय देवी प्राह वृतोऽसि मे २०

ततः स भगवान्देवस्तथा देव्या वृतस्तदा
उवाच तमशोकं वै वाचा संजीवयन्निव २१

यस्मात्तव सुपुष्पेण स्तबकेन वृतो ह्यहम्
तस्मात्त्वं जरया त्यक्तः अमरः सम्भविष्यसि २२

कामरूपः कामपुष्पः कामगो दयितो मम
सर्वाभरणपुष्पाढ्यः सर्ववृक्षफलोपगः २३

सर्वान्नभक्षदश्चैव अमृतस्रव एव च
सर्वगन्धश्च देव्यास्त्वं भविष्यसि दृढं प्रियः
निर्भयः सर्वलोकेषु चरिष्यसि सुनिर्वृतः २४

आश्रमं चैवमत्यर्थं चित्रकूटेति विश्रुतम्
योऽभियास्यति पुण्यार्थी सोऽश्वमेधमवाप्स्यति
यत्र तत्र मृतश्चापि ब्रह्मलोकं गमिष्यति २५

यश्चात्र नियमैर्युक्तः प्राणान्सम्यक्परित्यजेत्

स देव्यास्तपसा युक्तो महागणपतिर्भवेत् २६

सनत्कुमार उवाच
एवमुक्त्वा तदा देव आपृच्छ्य हिमवत्सुताम्
अन्तर्दधे जगत्स्रष्टा सर्वभूतप ईश्वरः २७

सापि देवी गते तस्मिन्भगवत्यमितात्मनि
तत एवोन्मुखी स्थित्वा शिलायां संविवेश ह २८

उन्मुखी सा गते तस्मिन्महेष्वासे प्रजापतौ
निशेव चन्द्ररहिता सा बभौ विमनास्तदा २९

अथ शुश्राव सा शब्दं बालस्यार्तस्य शैलजा
सरस्युदकसम्पूर्णे समीपे चाश्रमस्य ह ३०

स कृत्वा बालरूपं तु देवदेवः स्वयं शिवः
क्रीडाहेतोः सरोमध्ये ग्राहग्रस्तोऽभवत्तदा ३१

योगमायामथास्थाय प्रपञ्चोद्भवकारणम्
तद्रूपं सरसो मध्ये कृत्वेदं समभाषत
त्रातु मां कश्चिदेत्येह ग्राहेण हृतचेतसम् ३२

धिक्कष्टं बाल एवाहमप्राप्तार्थमनोरथः
यास्यामि निधनं वक्त्रे ग्राहस्यास्य दुरात्मनः ३३

शोचामि न स्वकं देहं ग्राहग्रस्तोऽपि दुःखितः
यथा शोचामि पितरं मातरं च तपस्विनीम् ३४

मां श्रुत्वा ग्राहवदने प्राप्तं निधनमुत्सुकौ
प्रियपुत्रावेकपुत्रौ प्राणान्नूनं विहास्यतः ३५

सनत्कुमार उवाच
श्रुत्वा तु देवी तं नादं विप्रस्यार्तस्य शोभना
उत्थाय प्रद्रुता तत्र यत्र तिष्ठत्यसौ द्विजः ३६

सापश्यदिन्दुवदना बालकं चारुरूपिणम्
ग्राहेण ग्रस्यमानं तं वेपमानमवस्थितम् ३७

सोऽपि ग्राहवरः श्रीमान्दृष्ट्वा देवीमुपागताम्
तं गृहीत्वा द्रुतं यातो मध्यं सरस एव ह ३८

स कृष्यमाणस्तेजस्वी नादमार्तं तदाकरोत्
अथाह देवी दुःखार्ता बालं दृष्ट्वा महाव्रता ३९

ग्राहराज महासत्त्व बालकं ह्येकपुत्रकम्
विसृजैनं महादंष्ट्र क्षिप्रं भीमपराक्रम ४०

ग्राह उवाच
यो देवि दिवसे षष्ठे प्रथमं समुपैति माम्
स आहारो मम पुरा विहितो लोककर्तृभिः ४१

सोऽयं मम महाभागे षष्ठेऽहनि गिरीन्द्रजे
ब्रह्मणा विहितो नूनं नैनं मोक्ष्ये कथंचन ४२

देव्युवाच
यन्मया हिमवच्छृङ्गे चरितं तप उत्तमम्
तेन बालमिमं मुञ्च ग्राहराज नमोऽस्तु ते ४३

ग्राह उवाच
मा व्ययं तपसो देवि कार्षीः शैलेन्द्रनन्दने
नैनं मोचयितुं शक्तो देवराजोऽपि स स्वयम् ४४

मह्यमीशेन तुष्टेन शर्वेणोग्रेण शूलिना
अमरत्वमवध्यत्वमक्षयं बलमेव च ४५

स्वयंग्रहणमोक्षश्च ज्ञानं चैवाव्ययं पुनः
दत्तं ततो ब्रवीमि त्वां नायं मोक्षमवाप्स्यति ४६

अथ वा ते कृपा देवि भृशं बाले शुभानने
ब्रवीमि यत्कुरु तथा ततो मोक्षमवाप्स्यति ४७

देव्युवाच
ग्राहाधिप वदस्वाशु यत्सतामविगर्हितम्
तत्कृतं नात्र संदेहो मान्या मे ब्राह्मणा दृढम् ४८

ग्राह उवाच
यत्कृतं वै तपः किंचिद्भवत्या स्वल्पमन्तशः
तत्सर्वं मे प्रयच्छस्व ततो मोक्षमवाप्स्यति ४९

देव्युवाच
जन्मप्रभृति यत्पुण्यं महाग्राह कृतं मया
तत्ते सर्वं मया दत्तं बालं मुञ्च ममाग्रतः ५०

सनत्कुमार उवाच
प्रजज्वाल ततो ग्राहस्तपसा तेन बृंहितः
आदित्य इव मध्याह्ने दुर्निरीक्ष्यस्तदाभवत् ५१

उवाच चेदं तुष्टात्मा देवीं लोकस्य धारिणीम्
देवि किं कृतमेतत्ते अनिश्चित्य महाव्रते
तपसो ह्यर्जनं दुःखं तस्य त्यागो न शस्यते ५२

गृहाण तप एतच्च बालं चेमं शुचिस्मिते
तुष्टोऽस्मि ते विप्रभक्त्या वरं तस्माद्ददामि ते ५३

सा त्वेवमुक्ता ग्राहेण उवाचेदं महाव्रता
सुनिश्चित्य महाग्राह कृतं बालस्य मोक्षणम्
न विप्रेभ्यस्तपः श्रेष्ठं श्रेष्ठा मे ब्राह्मणा मताः ५४

दत्त्वा चाहं न गृह्णामि ग्राहेन्द्र विदितं हि ते
न हि कश्चिन्नरो ग्राह प्रदत्तं पुनराहरेत् ५५

दत्तमेतन्मया तुभ्यं नाददानि हि तत्पुनः
त्वय्येव रमतामेतद्बालश्चायं विमुच्यताम् ५६

तथोक्तस्तां प्रशस्याथ मुक्त्वा बालं नमस्य च
देवीमादित्यसङ्काशं तत्रैवान्तरधीयत ५७

बालोऽपि सरसस्तीरे मुक्तो ग्राहेण वै तदा
स्वप्नलब्ध इवार्थौघस्तत्रैवान्तरधीयत ५८

तपसोऽथ व्ययं मत्वा देवी हिमगिरीन्द्रजा
भूय एव तपः कर्तुमारेभे यत्नमास्थिता ५९

कर्तुकामां तपो भूयो ज्ञात्वा तां शंकरः स्वयम्
प्रोवाच वचनं व्यास मा कृथास्तप इत्युत ६०

मह्यमेतत्तपो देवि त्वया दत्तं महाव्रते
तेनैवमक्षयं तुभ्यं भविष्यति सहस्रधा ६१

इति लब्ध्वा वरं देवी तपसोऽक्षय्यमुत्तमम्
स्वयंवरमुदीक्षन्ती तस्थौ प्रीतिमुदायुता ६२

इदं पठेद्यो हि नरः सदैव बालानुभावाचरणं हि शम्भोः
स देहभेदं समवाप्य पूतो भवेद्गणस्तस्य कुमारतुल्यः ६३

इति स्कन्दपुराणे द्वादशमोऽध्यायः

स्कन्दपुराण १३

सनत्कुमार उवाच
विस्तृते हिमवत्पृष्ठे विमानशतसंकुले
अभवत्स तु कालेन शैलपुत्र्याः स्वयंवरः १

अथ पर्वतराजोऽसौ हिमवान्ध्यानकोविदः
दुहितुर्देवदेवेन ज्ञात्वा तदभिमन्त्रितम् २

जानन्नपि महाशैलः समाचारक्रियेप्सया
स्वयंवरं ततो देव्याः सर्वलोकेष्वघोषयत् ३

देवदानवसिद्धानां सर्वलोकनिवासिनाम्
वृणुयात्परमेशानं समक्षं येन मे सुता ४

तदेव सुकृतं श्लाघ्यं ममाभ्युदयसंमतम्
इति संचिन्त्य शैलेन्द्रः कृत्वा हृदि महेश्वरम् ५

आब्रह्मकेषु लोकेषु देव्याः शैलेन्द्रसत्तमः
कृत्वा रत्नाकुलं देशं स्वयंवरमचीकरत् ६

अथैवमाघोषितमात्र एव स्वयंवरे व्यास महीध्रपुत्र्याः
देवादयः सर्वजगन्निवासाः समाययुर्दिव्यगृहीतवेषाः ७

प्रफुल्लपद्मासनसंनिविष्टः सिद्धैर्वृतो योगिभिरप्रमेयैः
विज्ञापितस्तेन महीध्रराज्ञा पितामहस्तत्र समाजगाम ८

अक्ष्णां सहस्रं सुरराट् स बिभ्रद्दिव्याङ्गहारस्त्रगुदात्तरूपः
ऐरावतं सर्वगजेन्द्रमुख्यं स्रवन्मदासारकृतप्रवाहम्
आरुह्य सर्वामरराट् स वज्रं बिभ्रत्समागात्पुरतः सुराणाम् ९

तेजःप्रतापाधिकदिव्यरूपः प्रोद्भासयन्सर्वदिशो विवस्वान्

हैमं विमानं सचलत्पताकमारुह्य आगात्त्वरितं जवेन  १०

मणिप्रदीप्तोज्ज्वलकुण्डलश्च वह्न्यर्कतेजःप्रतिमे विमाने
समभ्यगात्कश्यपविप्रसूनुरादित्य आगाद्भगनामधारी  ११

पीनाङ्गयष्टिः सुकृताङ्गहारस्तेजोबलाज्ञासदृशप्रभावः
दण्डं समादाय कृतान्त आगादारुह्य भीमं महिषं जवेन  १२

महामहीध्रोच्छ्र्यपीनगात्रः स्वर्णादिरत्नाचितचारुवेषः
समीरणः सर्वजगद्विभर्ता विमानमारुह्य समभ्यगाद्धि  १३

संतापयन्सर्वसुरासुरेशांस्तेजोधिकस्तेजसि संनिविश्य
वह्निः समभ्येत्य सुरेन्द्रमध्ये ज्वलन्प्रतस्थौ वरवेषधारी  १४

नानामणिप्रज्वलिताङ्गयष्टिर्जगच्चरन्दिव्यविमानमग्र्यम्
आरुह्य सर्वद्रविणाधिपेशः स राजराजस्त्वरितोऽभ्यगाच्च  १५

आप्याययन्सर्वसुरासुरेशान्कान्त्या च वेषेण च चारुरूपः
ज्वलन्महारत्नविचित्ररूपं विमानमारुह्य शशी समागात्  १६

श्यामाङ्गयष्टिः सुविचित्रवेषः सर्वस्रगाबद्धसुगन्धमाली
तार्क्ष्यं समारुह्य महीध्रकल्पं गदाधरोऽसौ त्वरितं समेतः  १७

तथाश्विनौ देवभिषग्वरौ तु एकं विमानं त्वरयाभिरुह्य
मनोहरावुज्ज्वलचारुवेषावाजग्मतुर्देवसदः सुवीरौ  १८

शेषः सहस्रं स्फुरदग्निवर्णं बिभ्रत्स्फटानां ज्वलनार्कतेजाः
सार्धं स नागैरपरैर्महात्मा विमानमारुह्य समभ्यगाच्च  १९

दितेः सुतानां च महासुराणां वह्न्यर्कशक्रानिलतुल्यभासाम्
वरानुरूपं प्रविधाय वेषं वृन्दं समागात्पुरतः सुराणाम्  २०

गन्धर्वराजः स च चारुरूपी दिव्यङ्गमो दिव्यविमानचारी
गन्धर्वसंघैः सहितोऽप्सरोभिः शक्राज्ञया तत्र समाजगाम २१

अन्ये च देवात्रिदिवौकसेशाः पृथक्पृथक्चारुगृहीतवेषाः
आजग्मुरारुह्य विमानपृष्ठं गन्धर्वयक्षोरगकिंनराश्च २२

शचीपतिस्तत्र सुरेन्द्रमध्ये राजाधिकाराधिकलक्ष्यमूर्तिः
आज्ञाबलैश्वर्यकृतप्रमोहो वृथाधिकं यत्नमुपाचकार २३

हेतुस्त्रिलोकस्य जगत्प्रसूतेर्माता च तेषां ससुरासुराणाम्
पत्नी च शम्भोः पुरुषस्य धाम्नो गीता पुराणे प्रकृतिः परार्था
दक्षस्य कोपाद्धिमवद्गृहं सा कार्यार्थमागात्परमेशपत्नी २४

एवं यतस्तां न विदुः सुरेशा मोहस्ततस्तान्पर आविवेश
वरार्थमाजग्मुरतो विमूढा ईशेन यस्माद्व्रडिताः कृतास्ते २५

ततः प्रनृत्ताभिरथाप्सरोभिर्गन्धर्वसंघैश्च सुगीतशब्दैः
स्थितैश्च नानाविधरूपवेषैर्देवासुरादित्रिदिवौकसंघैः २६

विमानपृष्ठे मणिहेमचित्रे स्थिता चलच्चामरवीजिताङ्गी
सर्वर्तुपुष्पां सुसुगन्धमालां प्रगृह्य देवी प्रसभं प्रतस्थे २७

सनत्कुमार उवाच
मालां प्रगृह्य देव्यां तु स्थितायां देवसंसदि
शक्राद्यैरागतैर्देवैः स्वयंवरमुपागतैः २८

देव्या जिज्ञासया शम्भुर्भूत्वा पञ्चशिखः शिशुः
उत्सङ्गतलसंसुप्तो बभूव सहसा विभुः २९

अकस्मादथ तं देवी शिशुं पञ्चशिखं स्थितम्
ज्ञात्वा योगसमाधानाज्जहृषे प्रीतिसंयुता ३०

अथ सा शुद्धसंकल्पा काङ्क्षितप्राप्तसत्फला
निर्वृतेव तदा तस्थौ कृत्वा हृदि तमेव तु ३१

ततो दृष्ट्वा शिशुं देवा देव्या उत्सङ्गवर्तिनम्
कोऽयमत्रेति संमन्त्र्य चुक्रुधुर्भृशमार्दिताः ३२

वज्रमाकारयत्तस्य बाहुमुत्क्षिप्य वृत्रहा
स बाहुरुत्थितस्तस्य तथैव समतिष्ठत ३३

स्तम्भितः शिशुरूपेण देवदेवेन शम्भुना
वज्रं क्षेप्तुं न शशाक बाहुं चालयितुं न च ३४

भगो नाम ततो देव आदित्यः काश्यपो बली
उत्क्षिप्य मुशलं दीप्तं क्षेप्तुमैच्छद्विमोहितः
तस्यापि भगवान्बाहुं तथैवास्तम्भयत्तदा ३५

शिरः प्रकम्पयन्विष्णुः सक्रोधस्तमवैक्षत
तस्यापि शिरसो देवः खालित्यं प्रचकार ह ३६

पूषा दन्तान्दशन्दन्तैः शर्वमैक्षत मोहितः
तस्यापि दशनाः पेतुर्दृष्टमात्रस्य शम्भुना ३७

यमस्य स्तम्भितो दण्डस्तेजो वह्नेः शशेः प्रभा
बलं वायोस्तथान्येषां तस्मिन्सर्वदिवौकसाम्
बलं तेजश्च योगं च तथैवास्तम्भयद्विभुः ३८

अथ तेषु स्थितेष्वेवं मन्युमत्सु सुरेषु तु
ब्रह्मा परमसंविग्नो ध्यानमास्थाय सादरम्
बुबुधे देवदेवेशमुमोत्सङ्गसमास्थितम् ३९

स बुद्ध्वा परमेशानं शीघ्रमुत्थाय सादरम्

ववन्दे चरणौ शम्भोरस्तुवच्च पितामहः
पौराणैः सामसंगीतैः पुण्याख्यैर्गुह्यनामभिः ४०

अजस्त्वममरो देव स्रष्टा हर्ता विभुः परः
प्रधानपुरुषस्तत्त्वं ब्रह्म ध्येयं तदव्ययम् ४१

अमृतं परमात्मा च ईश्वरः कारणं महत्
ब्रह्मकृत्प्रकृतेः स्रष्टा सर्वसृक्परमेश्वरः ४२

इयं च प्रकृतिर्देवी सदा ते सृष्टिकारणम्
पत्नीरूपं समास्थाय जगत्कारणमागता ४३

नमस्तुभ्यं सदेशान देव्याश्चैव सदा नमः
प्रसादात्तव देवेश नियोगाच्च मया प्रजाः ४४

देवाद्यास्त इमे सृष्टा मूढास्त्वद्योगमोहिताः
कुरु प्रसादमेतेषां यथापूर्वं भवन्त्विमे ४५

तत एवं तदा ब्रह्मा विज्ञाप्य परमेश्वरम्
स्तम्भितान्सर्वदेवांस्तानिदमाह महाद्युतिः ४६

मूढाः स्थ देवताः सर्वे नैनं बुध्यत शंकरम्
देवदेवमिहायातं ममैवोत्पत्तिकारणम् ४७

अयं रुद्रो महादेवः शर्वो भीमः कपर्दिमान्
उग्र ईशान आत्मा च अजः शंकर एव च ४८

देवदेवः परं धाम ईशः पशुपतिः पतिः
जगत्स्रष्टा जगद्धर्ता जगत्संस्थितिकारणम् ४९

गच्छध्वं शरणं शीघ्रमेवमेवामरेश्वराः

सार्धं मयैव देवेशं परमात्मानमव्ययम्  ५०

ततस्ते स्तम्भिताः सर्वे तथैव त्रिदिवौकसः
प्रणेमुर्मनसा शर्वं भावशुद्धेन चेतसा  ५१

अथ तेषां प्रसन्नोऽभूद्देवदेवो महेश्वरः
यथापूर्वं चकाराशु देवतानां तनूस्तदा  ५२

तत एवं प्रवृत्ते तु सर्वदेवनिवारणे
वपुश्चकार देवेशस्त्र्यक्षं परममद्भुतम्
तेजसा यस्य देवास्ते चक्षुरप्रार्थयन्विभुम्  ५३

तेभ्यः परमकं चक्षुः स्ववपुर्दृष्टिशक्तिमत्
प्रादात्परमदेवेशः अपश्यंस्ते तदा प्रभुम्  ५४

ते दृष्ट्वा परमेशानं तृतीयेक्षणधारिणम्
ब्रह्माद्या नेमिरे तूर्णं सर्व एव सुरेश्वराः  ५५

तस्य देवी तदा हृष्टा समक्षं त्रिदिवौकसाम्
पादयोः स्थापयामास स्रग्मालाममितद्युतेः  ५६

साधु साध्विति सम्प्रोच्य देवतास्ते पुनर्विभुम्
सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः  ५७

अथास्मिन्नन्तरे व्यास ब्रह्मा लोकपितामहः
हिमवन्तं महाशैलमिदमाह महाद्युतिः  ५८

श्लाघ्यः पूज्यश्च वन्द्यश्च सर्वेषां नस्त्वमद्य हि
शर्वेण सह सम्बन्धो यस्य तेऽभूदयं महान्
क्रियतां चाशु उद्वाहः किमर्थं स्थीयते परम्  ५९

ततः प्रणम्य हिमवांस्तं देवं प्रत्यभाषत
त्वमेव कारणं देव येन शर्वादयं मम ६०

प्रसादः सहसोत्पन्नो हेतुश्चापि त्वमेव हि
उद्वाहं तु यथा यादृक्तद्विधत्स्व पितामह ६१

तत एवं वचः श्रुत्वा गिरिराज्ञः पितामहः
उद्वाहः क्रियतां देव इति देवमुवाच ह
तमाह शंकरो देवं यथेष्टमिति लोकपः ६२

तत्क्षणाच्च ततो व्यास ब्रह्मणा कल्पितं पुरम्
उद्वाहार्थं महेशस्य नानारत्नोपशोभितम् ६३

रत्नानि मणयश्चित्रा हेम मौक्तिकमेव च
मूर्तिमन्त उपागम्य अलंचक्रुः पुरोत्तमम् ६४

चित्रा मारकती भूमिः सौवर्णस्तम्भशोभिता
भास्वत्स्फटिकभित्तीभिर्मुक्ताहारप्रलम्बिता ६५

तस्मिञ्छिवपुरे रम्ये उद्वाहार्थं विनिर्मिते
शुशुभे देवदेवस्य महेशस्य महात्मनः ६६

सोमादित्यौ समं तत्र भासयन्तौ महामणी
सौरभेयं मनोरम्यं गन्धमाघ्राय मारुतः
प्रववौ सुखसंस्पर्श ईशे भक्तिं प्रसादयन् ६७

समुद्रास्तत्र चत्वारः शक्राद्याश्च सुरोत्तमाः
देवनद्यो महानद्यः सिद्धा मुनय एव च ६८

गन्धर्वाप्सरसः सर्वे नागा यक्षाः सराक्षसाः
गुह्यकाः खेचराश्चान्ये किंनरा देवचारणाः ६९

तुम्बुरुर्नारदो हाहा हूहू चैव तु सामगाः
रत्नान्यादाय वाद्यांश तत्राजग्मुस्तदा पुरम् ७०

ऋषयः कृत्स्नशस्तत्र वेदगीतांस्तपोधनाः
पुण्यान्वैवाहिकान्मन्त्राञ्जेपुः संहृष्टमानसाः ७१

जगतो मातरः सर्वा देवकन्याश्च कृत्स्नशः
गायन्ति हृषिताः सर्वा उद्वाहे परमेष्ठिनः ७२

ऋतवः षट् समं तत्र नानागन्धसुखावहाः
उद्वाहः शंकरस्येति मूर्तिमन्त उपस्थिताः ७३

नीलजीमूतसंघातमन्द्रध्वानप्रहर्षितैः
केकायमानैः शिखिभिर्नृत्यमानैश्च सर्वशः ७४

विलोलपिङ्गलस्पष्टविद्युल्लेखावभासिता
कुमुदापीतशुक्लाभिर्बलाकाभिश्च शोभिता ७५

प्रत्यग्रसंजातशिलीन्ध्रकन्दला लताद्रुमाभ्युद्गतचारुपल्लवा
शुभाम्बुधाराप्रणयप्रबोधितैर्मदालसैर्भेकगणैश्च नादिता ७६

प्रियेषु मानोन्नतमानसानां सुनिश्चितानामपि कामिनीनाम्
मयूरकेकाभिरुतैः क्षणेन मनोहरैर्मानविभङ्गकर्त्री ७७

तथा त्रिवर्णोज्ज्वलचारुमूर्तिना शशाङ्कलेखाकुटिलेन सर्वतः
पयोदसंघातसमीपवर्तिना महेन्द्रचापेन भृशं विराजिता ७८

विचित्रपुष्पस्पर्शात्सुगन्धिभिर्घनाम्बुसम्पर्कतया सुशीतलैः
विकम्पयन्ती पवनैर्मनोहरैः सुराङ्गनानामलकावलीः शुभाः ७९

गर्जत्पयोदस्थगितेन्दुबिम्बा नवाम्बुसेकोद्गतचारुदूर्वा

निरीक्षिता सादरमुत्सुकाभिर्निश्वासधूम्रं पथिकाङ्गनाभिः ८०

हंसनूपुरशब्दाढ्या समुन्नतपयोधरा
चलद्विद्युल्लताकाञ्ची स्पष्टपद्मविलोचना ८१

असितजलदवृन्दध्वानवित्रस्तहंसा विमलसलिलधारापातनम्रोत्पलाग्रा
सुरभिकुसुमरेणुकप्तसर्वाङ्गशोभा गिरिदुहितृविवाहे प्रावृडागाद्विभूत्यै ८२

मेघकञ्चुकनिर्मुक्ता पद्मकोशोद्गतस्तनी
हंसनूपुरनिर्ह्लादा सर्वरम्यदिगन्तरा ८३

विस्तीर्णपुलिनश्रोणी कूजत्सारसमेखला
प्रफुल्लेन्दीवराभोगविलोचनमनोहरा ८४

पक्वबिम्बाधरपुटा कुन्ददन्तप्रहासिनी
नवश्यामालताश्यामरोमराजीपरिष्कृता ८५

चन्द्रांशुहारवर्येण सौधोरःस्थलसर्पिणा
प्रह्लादयन्ती चेतांसि सर्वेषां त्रिदिवौकसाम् ८६

समदालिकुलोद्गीतमधुरस्वरभाषिणी
चलत्कुमुदसंघातचारुकुण्डलशोभिनी ८७

रक्ताशोकाग्रशाखोत्थपल्लवाङ्गुलिधारिणी
तत्पुष्पसंचयमयैर्वासोभिः समलंकृता ८८

रक्तोत्पलाग्रचरणा जातीपुष्पनखावली
कदलीस्तम्भचारूरुः शशाङ्कवदना तथा ८९

पद्मकिञ्जल्कसम्पृक्तपवनाग्रकरैः सुरान्
प्रेम्णा स्पृशन्ती कान्तेव शरदागान्मनोरमा ९०

निर्मुक्तासितमेघकञ्चुकपुटा पूर्णेन्दुबिम्बानना
नीलाम्भोजविलोचनारविन्दमुकुलप्रोद्भिन्नचारुस्तनी
नानापुष्परजःसुगन्धिपवनप्रह्लादनी चेतसां
तत्रागात्कलहंसनूपुररवा देव्या विवाहे शरत्  ९१

अत्यर्थशीतलाम्भोभिः प्लावयन्तौ गिरेः शिलाः
ऋतू शिशिरहेमन्तावाजग्मतुरतिद्युती  ९२

ताभ्यामृतुभ्यां प्राप्ताभ्यां हिमवान्स नगोत्तमः
प्रालेयचूर्णवर्षिभ्यां क्षिप्रं रौप्य इवाबभौ  ९३

तेन प्रालेयवर्षेण घनेन स हिमाचलः
अगाधेन तदा रेजे क्षीरोद इव सागरः  ९४

हिमस्थानेषु हिमवान्नाशयामास पादपान्
साधूपचारान्सहसा कृतार्थ इव दुर्जनः  ९५

प्रालेयपटलच्छन्नैः शृङ्गैः स शुशुभे नगः
छत्रैरिव महाभोगैः पाण्डरैः पृथिवीपतिः  ९६

पाण्डराणि विशालानि श्रीमन्ति सुभगानि च
तुङ्गानि चाद्रिशृङ्गाणि सौधानीव चकाशिरे  ९७

तस्याचलेन्द्रस्य दरीष्वतीव विचित्रसारङ्गकुलाकुलासु
प्रालेयधाराः शशिपादगौरा गोक्षीरधारा इव संनिपेतुः  ९८

बहुकुसुमरजोभिरुत्कराङ्गा हिमकणसङ्गसुशीतलाः समीराः
ववुरमरगणेश्वराम्बराणि प्रतनुतमानि शनैर्विकम्पयन्तः  ९९

निर्धूतरूक्षानिलशीतदोषः प्रोद्भिन्नचूताङ्कुरकर्णपूरः
वसन्तकालश्च तमद्रिपुत्रीसेवार्थमागाद्धिमवन्तमाशु  १००

तस्मिन्नृतावद्रिसुताविवाहसिषेवया तं गिरिमभ्युपेते
प्रादुर्बभूवुः कुसुमावतंसाः समन्ततः पादपगुल्मषराडाः १०१

ववुः सुगन्धाः सुभगाः सुशीता विचित्रपुष्पाग्ररजोत्कराङ्काः
मनोभवोद्रेककराः सुराणां सुराङ्गनानां च मुहुः समीराः १०२

स्वच्छाम्बुपूर्णाश्च तथा नलिन्यः पद्मोत्पलानां मुकुलैरुपेताः
ईषत्समुद्भिन्नपयोधराग्रा नार्यो यथा रम्यतमा बभूवुः १०३

ऋतोः स्वभावाच्च मदोद्भवाच्च फुल्लासु शाखासु निलीनपद्माः
चेतोभिरामं त्रिदशाङ्गनानां पुंस्कोकिलाश्चातिकलं विनेदुः १०४

नात्युष्णशीतानि सरःपयांसि किञ्जल्कचूर्णैः कपिलीकृतानि
चक्राह्वयुग्मैरुपनादितानि पपुः प्रहृष्टाः सुरदन्तिमुख्याः १०५

प्रियङ्गूश्चूततरवश्चूतांश्चापि प्रियङ्गवः
तर्जयन्त इवान्योन्यं मञ्जरीभिश्चकाशिरे १०६

हिमशुक्लेषु शृङ्गेषु तिलकाः कुसुमोत्कराः
शुशुभुः कार्यमुद्दिश्य वृद्धा इव समागताः १०७

फुल्लाशोकलतास्तत्र रेजिरे शालसंश्रिताः
कामिन्य इव कान्तानां कराठालम्बितमूर्तयः १०८

समदालिकुलोद्गीतलताकुसुमसंचयाः
परस्परं हि मालत्यो भाषन्त्य इव रेजिरे १०९

नीलानि नीलाम्बुरुहैः पयांसि गौराणि गौरैश्च सनालदराडैः
रक्तैश्च रक्तानि भृशं कृतानि मत्तद्विरेफार्धविदष्टपत्रैः ११०

हैमानि विस्तीर्णजलेषु केषुचिन्निरन्तरं मारकतानि केषुचित्

वैदूर्यनालानि सरःसु केषुचित्प्रजज्ञिरे पद्मवनानि सर्वतः ११११

वाप्यस्तत्राभवन्रम्याः कमलोत्पलभूषिताः
नानाविहगसंघुष्टा हेमसोपानपङ्क्तयः ११२

शृङ्गाणि तस्य तु गिरेः कर्णिकारैः सुपुष्पितैः
समुच्छ्रितान्यविरलैर्हैमानीव बभुर्मुने ११३

ईषदुद्भिन्नकुसुमैः पाटलैश्चापि पाटलाः
सम्बभूवुर्दिशः सर्वाः पवनाकम्पिमूर्तिभिः ११४

कृष्णाञ्जनाद्रिशृङ्गाभा नीलाशोकमहीरुहाः
गिरौ ववृधिरे फुल्लाः स्पर्धयेव परस्परम् ११५

चीरुवाकविघुष्टानि किंशुकानां वनानि च
पर्वतस्य नितम्बेषु सर्वेष्वेवाभिजज्ञिरे ११६

तमालगुल्मैस्तस्यासीच्छोभा हिमवतस्तदा
नीलजीमूतसंघातैर्निलीनैरिव सन्धिषु ११७

निकामपुष्पैः सुविशालशाखैः समुच्छ्रितैश्चम्पकपादपैश्च
प्रमत्तपुंस्कोकिलसम्प्रलापैर्हिमाचलोऽतीव तदा रराज ११८

श्रुत्वा शब्दं ऋतुमदकलं सर्वतः कोकिलानां
चञ्चत्पक्षाः सुमधुररुतं नीलकण्ठा विनेदुः
तेषां शब्दैरुपचितबलः पुष्पचापेषुहस्तः
सज्जीभूतस्त्रिदशवनिता वेद्धुमङ्गेष्वनङ्गः ११९

पटुसूर्यातपश्चापि प्रायः सोष्णजलाशयः
देवीविवाहसेवार्थं ग्रीष्म आगाद्धिमाचलम् १२०

स चापि तरुभिस्तत्र बहुभिः कुसुमोत्करैः
शोभयामास शृङ्गाणि प्रालेयाद्रेः समन्ततः १२१

तस्यापि च ऋतोस्तत्र वायवः सुमनोहराः
ववुः पाटलविस्तीर्णकदम्बार्जुनगन्धिनः १२२

वाप्यः प्रफुल्लपद्मौघाः केसरारुणमूर्तयः
अभवंस्तटसंघुष्टकलहंसकदम्बकाः १२३

तथा कुरवकाश्चापि कुसुमापाण्डुमूर्तयः
सर्वेषु जज्ञुः शृङ्गेषु भ्रमरावलिसेविताः १२४

बकुलाश्च नितम्बेषु विशालेषु महीभृतः
उत्ससर्जुर्मनोज्ञानि कुसुमानि समन्ततः १२५

इति कुसुमविचित्रसर्ववृक्षा विविधविहंगमनादरम्यदेशाः
हिमगिरितनयाविवाहभूत्यै षडुपययुर्ऋतवो मुनिप्रवीर १२६

तत एवं प्रवृत्ते तु सर्वभूतसमागमे
नानावाद्यशताकीर्णे ब्रह्मा मम पिता स्वयम् १२७

शैलपुत्रीमलंकृत्य योग्याभरणसम्पदा
पुरं प्रवेशयामास स्वयमादाय लोकधृक् १२८

ततस्तु पुनरेवेशं ब्रह्मा व्यज्ञापयद्विभुम्
हविर्जुहोमि वह्नौ तु उपाध्यायपदे स्थितः
ददासि मह्यं यद्याज्ञां कर्तव्योऽयं क्रियाविधिः १२९

तमाह शंकरो देवं देवदेवो जगत्पतिः
यद्यदिष्टं सुरेशान तत्कुरुष्व यथेप्सितम्
कर्तास्मि वचनं सर्वं ब्रह्मंस्तव जगद्विभो १३०

ततः प्रणम्य हृष्टात्मा ब्रह्मा लोकपितामहः
हस्तं देवस्य देव्याश्च योगबन्धे युयोज ह १३१

ज्वलनं च स्वयं कृत्वा कृताञ्जलिमुपस्थितं
श्रुतिगीतैर्महामन्त्रैर्मूर्तिमद्भिरुपस्थितैः १३२

यथोक्तविधिना हुत्वा सर्पिस्तदमृतं च हि
त्रिश्च तं ज्वलनं देवं कारयित्वा प्रदक्षिणम् १३३

मुक्त्वा हस्तसमायोगं सहितः सर्वदेवतैः
सुतैश्च मानसैः सर्वैः प्रहृष्टेनान्तरात्मना
वृत्ते उद्वाहकाले तु प्रणनाम वृषध्वजम् १३४

योगेनैव तयोर्व्यास तदोमापरमेशयोः
उद्वाहः स परो वृत्तो यं देवा न विदुः क्वचित् १३५

इति ते सर्वमाख्यातं स्वयंवरमिदं शुभम्
उद्वाहश्चैव देवस्य शृणवतः परमाद्भुतम् १३६

इति स्कन्दपुराणे नाम त्रयोदशोऽध्यायः

## स्कन्दपुराण १४

सनत्कुमार उवाच
अथ वृत्ते विवाहे तु भवस्यामिततेजसः
प्रहर्षमतुलं गत्वा देवाः सहपितामहाः
तुष्टुवुर्वाग्भिरिष्टाभिः प्रणमन्तो महेश्वरम् १

नमः पर्वतलिङ्गाय पर्वतेशाय वै नमः
नमः पवनवेगाय विरूपायाजिताय च २

नमः क्लेशविनाशाय दात्रे च शुभसम्पदाम्
नमो नीलशिखण्डाय अम्बिकापतये नमः ३

नमः पवनरूपाय शतरूपाय वै नमः
नमो भैरवरूपाय विरूपनयनाय च ४

नमः सहस्रनेत्राय सहस्रचरणाय च
नमो वेदरहस्याय वेदाङ्गाय नमो नमः ५

विष्टम्भनाय शक्रस्य बाहोर्वेदाङ्कुराय च
चराचराधिपतये शमनाय नमो नमः ६

सलिलेशयलिङ्गाय युगान्तायतलिङ्गिने
नमः कपालमालाय कपालस्रग्मिणे नमः ७

नमः कपालहस्ताय दंष्ट्रिणे गदिने नमः
नमस्त्रैलोक्यवाहाय सप्तलोकरथाय च ८

नमः खट्वाङ्गहस्ताय प्रमथार्तिहराय च
नमो यज्ञशिरोहर्त्रे कृष्णकेशापहारिणे ९

भगनेत्रनिपाताय पूष्णो दन्तहराय च
नमः पिनाकशूलासिखड्गमुद्गरधारिणे १०

नमोऽस्तु कालकालाय तृतीयनयनाय च
अन्तकान्तकृते चैव नमः पर्वतवासिने ११

सुवर्णरेतसे चैव सर्पकुण्डलधारिणे
वाड्वलेर्योगनाशाय योगिनां गुरवे नमः १२

शशाङ्कादित्यनेत्राय ललाटनयनाय च
नमः श्मशानरतये श्मशानवरदाय च १३

नमो दैवतनाथाय त्र्यम्बकाय नमो नमः

अशनीशतहासाय ब्रह्मण्यायाजिताय च १४

गृहस्थसाधवे नित्यं जटिने ब्रह्मचारिणे
नमो मुण्डार्धमुण्डाय पशूनां पतये नमः १५

सलिले तप्यमानाय योगैश्वर्यप्रदाय च
नमः शान्ताय दान्ताय प्रलयोत्पत्तिकारिणे १६

नमोऽनुग्रहकर्त्रे च स्थितिकर्त्रे नमो नमः
नमो रुद्राय वसवे आदित्यायाश्विने नमः १७

नमः पित्रेऽथ साध्याय विश्वेदेवाय वै नमः
नमः शर्वाय सर्वाय उग्राय वरदाय च १८

नमो भीमाय सेनान्ये पशूनां पतये नमः
शुचये रेरिहाणाय सद्योजाताय वै नमः १९

महादेवाय चित्राय नमश्चित्ररथाय च
प्रधानाय प्रमेयाय कार्याय करणाय च २०

पुरुषाय नमस्तेऽस्तु पुरुषेच्छाकराय च
नमः पुरुषसंयोगप्रधानगुणकारिणे २१

प्रवर्तकाय प्रकृतेः पुरुषस्य च सर्वशः
कृताकृतस्य संवेत्त्रे फलसंयोगदाय च २२

कालज्ञाय च सर्वत्र नमो नियमकारिणे
नमो वैषम्यकर्त्रे च गुणानां वृत्तिदाय च २३

नमस्ते देवदेवेश नमस्ते भूतभावन
शिवः सौम्यः सुखो द्रष्टुं भव सोमो हि नः प्रभो २४

सनत्कुमार उवाच
एवं स भगवान्देवो जगत्पतिरुमापतिः
स्तूयमानः सुरैः सर्वैरमरानिदमब्रवीत् २५

द्रष्टुं सुखश्च सौम्यश्च देवानामस्मि भो सुराः
वरं ब्रूत यथेष्टं च दातास्मि वदतानघाः २६

ततस्ते प्रणताः सर्वे ऊचुः सब्रह्मकाः सुराः
तवैव भगवन्हस्ते वर एषोऽवतिष्ठताम्
यदा कार्यं तदा नस्त्वं दास्यसे वरमीप्सितम् २७

एवमस्त्विति तानुक्त्वा विसृज्य च सुरान्हरः
लोकांश्च प्रमथैः सार्धं विवेश भवनं ततः २८

यस्तु हरोत्सवमद्भुतमेतं गायति दैवतविप्रसमक्षम्
सोऽप्रतिरूपगणेशसमानो देहविपर्ययमेत्य सुखी स्यात् २९

सनत्कुमार उवाच
पाराशर्य स्तवं हीदं शृणुयाद्यः पठेत वा
स स्वर्गलोकगो देवैः पूज्यतेऽमरराडिव ३०

इति स्कन्दपुराणे चतुर्दशमोऽध्यायः

स्कन्दपुराण १५

सनत्कुमार उवाच
प्रविष्टे भवनं देवे सूपविष्टे वरासने
स बहिर्मन्मथः क्रूरो देवं वेद्धुमनाभवत् १

तमनाचारसंयुक्तं दुरात्मानं कुलाधमम्
लोकान्सर्वांस्तापयानं सर्वेष्वकरुणात्मकम् २

ऋषीणां विघ्नकर्तारं नियमानां व्रतैः सह

चक्राह्वयस्य रूपेण रत्या सह तमागतम्  ३

अथाततायिनं व्यास वेद्धुकामं सुरेश्वरम्
नयनेन तृतीयेन सावज्ञं तमवैक्षत  ४

ततोऽस्य नेत्रजो वह्निर्ज्वालामालासहस्रवान्
संवृत्य रतिभर्तारमदहत्सपरिच्छदम्  ५

स दह्यमानः करुणमार्तोऽक्रोशत विस्वरम्
प्रसादयंश्च तं देवं पपात स महीतले  ६

आशु सोऽग्निपरीताङ्गो मन्मथो लोकतापनः
पपात भस्मसाच्चैव क्षणेन समपद्यत  ७

पत्नी तु करुणं तस्य विललाप सुदुःखिता
देवं देवीं च दुःखार्ता अयाचत्करुणायती  ८

तस्याश्च करुणां श्रुत्वा देवौ तौ करुणात्मकौ
ऊचतुस्तां समालोक्य समाश्वास्य च दुःखिताम्  ९

दग्ध एष ध्रुवं भद्रे नास्योत्पत्तिरिहेष्यते
अशरीरोऽपि ते काले कार्यं सर्वं करिष्यति  १०

यदा तु विष्णुर्भविता वसुदेवसुतः शुभे
तदा तस्य सुतोऽयं स्यात्पतिस्ते स भविष्यति  ११

सनत्कुमार उवाच
ततः सा तं वरं लब्ध्वा कामपत्नी शुभानना
जगामेष्टं तदा देशं प्रीतियुक्ता गतक्लमा  १२

सनत्कुमार उवाच

एवं दग्ध्वा स कामं तु शंकरो मूढचेतसम्
प्रोवाच हिमवत्पुत्रीं भक्त्या मुनिवरस्य ह  १३

वसिष्ठो नाम विप्रेन्द्रो मां कृत्वा हृदि तप्यते
तस्याहं वरदानाय प्रयास्यामि महाव्रते  १४

एवमुक्त्वा स देवीं तु भक्तिप्रीत्या तदा विभुः
जगाम तप्यतोऽभ्याशं वसिष्ठस्य मुनेर्विभुः  १५

ततो मुनिवरश्रेष्ठं वरिष्ठं तपतां वरम्
वसिष्ठमृषिशार्दूलं तप्यमानं परं तपः  १६

पूर्णे वर्षसहस्रे तु ज्वलमानमिवानलम्
उवाच भगवान्गत्वा ब्रूहि किं ते ददानि ते
ददामि दिव्यं चक्षुस्ते पश्य मां सगणं द्विज  १७

दृष्ट्वा स तु तमीशानं प्रणम्य शिरसा प्रभुम्
शिरस्यञ्जलिमाधाय तुष्टाव हृषिताननः  १८

वसिष्ठ उवाच
नमः कनकलिङ्गाय वेदलिङ्गाय वै नमः
नमः सहस्रलिङ्गाय वह्निलिङ्गाय वै नमः  १९

नमः पुराणलिङ्गाय श्रुतिलिङ्गाय वै नमः
नमः पवनलिङ्गाय ब्रह्मलिङ्गाय वै नमः  २०

नमस्त्रैलोक्यलिङ्गाय दाहलिङ्गाय वै नमः
नमः पर्वतलिङ्गाय स्थितिलिङ्गाय वै नमः  २१

नमो रहस्यलिङ्गाय सप्तद्वीपोर्ध्वलिङ्गिने
नमः सर्वार्थलिङ्गाय सर्वलोकाङ्गलिङ्गिने  २२

नमोऽस्त्वव्यक्तलिङ्गाय बुद्धिलिङ्गाय वै नमः
नमोऽहंकारलिङ्गाय भूतलिङ्गाय वै नमः २३

नम इन्द्रियलिङ्गाय नमस्तन्मात्रलिङ्गिने
नमः पुरुषलिङ्गाय भावलिङ्गाय वै नमः २४

नमः सर्वार्थलिङ्गाय तमोलिङ्गाय वै नमः
नमो रजोर्ध्वलिङ्गाय सत्त्वलिङ्गाय वै नमः २५

नमो गगनलिङ्गाय तेजोलिङ्गाय वै नमः
नमो वायूर्ध्वलिङ्गाय शब्दलिङ्गाय वै नमः २६

नमो ऋक्स्तुतलिङ्गाय यजुर्लिङ्गाय वै नमः
नमस्तेऽथर्वलिङ्गाय सामलिङ्गाय वै नमः २७

नमो यज्ञाङ्गलिङ्गाय यज्ञलिङ्गाय वै नमः
नमस्तेऽनन्तलिङ्गाय देवानुगतलिङ्गिने २८

दिश नः परमं योगमपत्यं मत्समं तथा
ब्रह्म चैवाक्षयं देव शमं चैव परं विभो
अक्षयत्वं च वंशस्य धर्मे च मतिमक्षयाम् २९

सनत्कुमार उवाच
एवं स भगवान्व्यास वसिष्ठेनामितात्मना
स्तूयमानस्तुतोषाथ तुष्टश्चेदं तमब्रवीत् ३०

भगवानुवाच
तुष्टस्तेऽहं ददान्येतत्तव सर्वं मनोगतम्
योगं च परमं सूक्ष्ममक्षयं सर्वकामिकम् ३१

पौत्रं च त्वत्समं दिव्यं तपोयोगबलान्वितम्

ददानि ते ऋषिश्रेष्ठ प्रतिभास्यन्ति चैव ते ३२

दमः शमस्तथा कीर्तिस्तुष्टिरक्रोध एव च
नित्यं तव भविष्यन्ति अमरत्वं च सर्वशः ३३

अवध्यत्वमसह्यत्वमक्षयत्वं च सर्वदा
वंशस्य चाक्षतिर्विप्र धर्मे च रतिरव्यया
ब्रूहि चान्यानपि वरान्ददामि ऋषिसत्तम ३४

वसिष्ठ उवाच
भगवन्विदितं सर्वं भविष्यं देवसत्तम
न स्याद्धि तत्तथा देव यथा वा मन्यसे प्रभो ३५

देव उवाच
भविष्यं नान्यथा कुर्यादिति मे निश्चिता मतिः
अहं कर्ता भविष्यस्य कथं कुर्यात्तदन्यथा ३६

तथा तन्नात्र संदेहो विहितं यद्यथा मया
तस्मात्तेऽनुग्रहं कर्ता भूयः पुत्रस्तवाव्ययः ३७

सनत्कुमार उवाच
एवमुक्त्वा ततो देवः कपर्दी नीललोहितः
पश्यतस्तस्य विप्रर्षेः क्षणादन्तरधीयत ३८

इति स्कन्दपुराणे पञ्चदशमोऽध्यायः

स्कन्दपुराण १६

व्यास उवाच
वरान्स लब्ध्वा भगवान्वसिष्ठोऽस्मत्पितामहः
कं पुत्रं जनयामास आत्मनः सदृशद्युतिम् १

सनत्कुमार उवाच

तेनासौ वरदानेन देवदेवस्य शूलिनः
अरुन्धत्यामजनयत्तपोयोगबलान्वितम्
ब्रह्मिष्ठं शक्तिनामानं पुत्रं पुत्रशताग्रजम्  २

तस्य बाल्यात्प्रभृत्येव वासिष्ठस्य महात्मनः
परेण चेतसा भक्तिरभवद्गोवृषध्वजे  ३

स कदाचिदपत्यार्थमाराधयदुमापतिम्
तस्य तुष्टो महादेवो वरदोऽस्मीत्यभाषत  ४

अथ दृष्ट्वा तमीशानमिदमाहानताननः
केन स्तोष्यामि ते देव यस्त्वं सर्वजगत्पतिः
सर्वान्धारयसे लोकानात्मना समयाद्विभो  ५

त्वमेव भोक्ता भोज्यं च कर्ता कार्यं तथा क्रिया
उत्पादकस्तथोत्पाद्य उत्पत्तिश्चैव सर्वशः  ६

आत्मानं पुत्रनामानं मम तुल्यं गुणैर्विभो
इच्छामि दत्तं देवेश एष मे दीयतां वरः  ७

सनत्कुमार उवाच
तमेवंवादिनं देवः प्रहस्य वदतां वरः
उवाच वचसा व्यास दिशः सर्वा विनादयन्  ८

त्वयाहं याचितः शक्ते स च ते संभविष्यति
त्वत्समः सर्ववेदज्ञस्त्वदीयो मुनिपुंगव  ९

बीजात्मा च तथोद्भूतः स्वयमेवाङ्कुरात्मना
बीजात्मना न भवति परिणामान्तरं गतः  १०

एवं स आत्मनात्मा वः संभूतोऽपत्यसंज्ञितः

स्वेनात्मना न भविता परिणामान्तरं गतः ११

सनत्कुमार उवाच
एवमुक्त्वा तु तं देवः प्रहस्य च निरीक्ष्य च
जगाम सहसा योगी अदृश्यत्वमतिद्युतिः १२

तस्मिन्गते महादेवे शक्तिस्तव पितामहः
वचस्तत्परिनिश्चिन्त्य एवमेवेत्यमन्यत १३

अथ कालेऽतिमहति समतीते शुभव्रते
तपसा भावितश्चापि महताग्निसमप्रभः
अदृश्यन्त्यां महाप्रज्ञ आदधे गर्भमुत्तमम् १४

तस्यामापन्नसत्त्वायां राजा कल्माषपादृषिम्
भक्षयामास संरब्धो रक्षसा हृतचेतनः १५

इति स्कन्दपुराणे षोडशोऽध्यायः

स्कन्दपुराण १७

व्यास उवाच
कस्मात्स राजा तमृषिं चखाद तपसान्वितम्
रक्षसा स किमर्थं च हृतचेताभवन्नृपः १

सनत्कुमार उवाच
वसिष्ठयाज्यो राजासीन्नाम्ना मित्रसहः प्रभुः
सुदासपुत्रो बलवानिन्द्रचन्द्रसमद्युतिः २

तमागम्योचिवाञ्छक्तिश्चरिष्ये दीक्षितो व्रतम्
तत्र मे निशि राजेन्द्र सदैव पिशिताशनम् ३

इहागतस्य यच्छस्व शुचि सर्वगुणान्वितम्
अप्रतीकारसंयुक्तमेकदैकान्त एव च ४

एवमस्त्विति तेनोक्तो जगाम स महामनाः
अथास्यान्तर्हितं रक्षो नृपतेरभवत्तदा
नाज्ञापयत्तदा सूदं तस्यार्थे मुनिसत्तम ५

गतेऽथ दिवसे तात संस्मृत्य प्रयतात्मवान्
सूदमाहूय चोवाच आर्तवत्स नराधिपः ६

सौदास उवाच
मयामृतवसो प्रातर्गुरुपुत्रस्य धीमतः
पिशितं सम्प्रतिज्ञातं भोजनं निशि संस्कृतम्
तत्कुरुष्व तथा क्षिप्रं कालो नो नात्यगाद्यथा ७

स एवमुक्तः प्रोवाच सूदोऽमृतवसुस्तदा
राजंस्त्वया नो नाख्यातं प्रागेव नरपुंगव
साम्प्रतं नास्ति पिशितं स्तोकमप्यभिकाङ्क्षितम् ८

पिशितस्यैव चाल्पत्वाद्बहूनां चैव तद्भुजाम्
अमितस्य प्रदानाच्च न किंचिदवशिष्यते ९

राजोवाच
जाने सर्वोपयोगं च जाने चादुष्टतां तव
जाने स्तोकं च पिशितं कार्यं चेदं तथाविधम्
मृग्यतां पिशितं क्षिप्रं लब्धव्यं यत्र मन्यसे १०

सनत्कुमार उवाच
एवमुक्तोऽमृतवसुः प्रयत्नं महदास्थितः
पिशितं मृगयन्सम्यङ्नाप्यविन्दत कर्हिचित् ११

यदा न लब्धवान्मांसं तदोवाच नराधिपम्
गत्वा निशि महाराजमिदं वचनमर्थवत् १२

राजन्न पिशितं त्वस्ति पुरेऽस्मिञ्छुचि कर्हिचित्
मृगयन्परिखिन्नोऽस्मि शाधि किं करवाणि ते १३

सनत्कुमार उवाच
स एवमुक्तः सूदेन तस्मिन्काले नराधिपः
नोवाच किंचित्तं सूदं तूष्णीमेव बभूव ह १४

तदन्तरमभिप्रेक्ष्य विश्वामित्रसमीरितः
राक्षसो रुधिरो नाम संविवेश नराधिपम् १५

रक्षसा स तदाविष्टो रुधिरेण दुरात्मना
उवाच सूदं शनकैः कर्णमूले महाद्युतिः १६

गच्छ यत्किंचिदानीय मांसं मानुषमन्ततः
गार्दभं वाप्यथौष्ट्रं वा सर्वं संस्कर्तुमर्हसि १७

किमसौ ज्ञास्यते रात्रौ त्वया भूयश्च संस्कृतम्
रसवद्गन्धवच्चैव क्षिप्रमेव समाचर १८

सनत्कुमार उवाच
स एवमुक्तस्तेनाथ मानुषं मांसमाददे
राजापकारिणो व्यास मृतोत्सृष्टस्य कस्यचित् १९

अथार्धरात्रसमये भास्कराकारवर्चसम्
शतानलसमप्रख्यमपश्यन्मुनिसत्तमम् २०

स तमर्घ्येण पाद्येन आसनाग्र्यवरेण च
समर्चयित्वा विधिवदन्नमस्योपपादयत् २१

स तदन्नं समानीतं समालभ्य महातपाः
चुकोप कुपितश्चाह पार्थिवं प्रदहन्निव २२

शक्तिरुवाच
पार्थिवाधम विप्राणां भोजनं राक्षसोचितम्
न दीयते विधिज्ञेन त्वं तु मामवमन्यसे  २३

यस्मात्त्वं राक्षसमिदं मह्यं दित्ससि भोजनम्
तस्मात्त्वं कर्मणा तेन पुरुषादो भविष्यसि  २४

सनत्कुमार उवाच
एवमुक्तस्तु तेजस्वी राजा संचिन्त्य तत्तदा
उवाच क्रोधरक्ताक्षो राक्षसाविष्टचेतनः  २५

पुरुषादो भवेत्येवं मामवोचद्भवान्यतः
ततस्त्वां भक्षयिष्यामि भ्रातृभिः सहितं द्विज  २६

भक्षयित्वा विशुद्ध्यर्थं मुक्तशापस्ततः परम्
चरिष्यामि तपः शुद्धं संयम्येन्द्रियसंहतिम्
पित्रा तवाभ्यनुज्ञातः स्वर्गे वत्स्ये यथेप्सितम्  २७

इति स्कन्दपुराणे सप्तदशमोऽध्यायः

स्कन्दपुराण १८

सनत्कुमार उवाच
ततः स राजा स्वं राज्यमुत्सृज्य सह भार्यया
वनं विवेश तत्राभूत्पुरुषादो महाबलः  १

सोऽभक्षयत तत्राग्रे शक्तिमेव महामुनिम्
ततो भ्रातृशतं तस्य वसिष्ठस्यैव पश्यतः  २

ततः पुत्रवधं घोरं दृष्ट्वा ब्रह्मसुतः प्रभुः
नोत्ससर्ज तदा क्रोधं वसिष्ठः कौशिकं प्रति
पुत्रशोकेन महता भृशमेवान्वकीर्यत  ३

स बद्ध्वा महतीं कण्ठे शिलां ब्रह्मसुतः प्रभुः
नद्यामात्मानमुत्सृज्य शतधा साद्रवद्भयात्
शतद्रूरिति तां प्राहुर्मुनयः संशितव्रताः ४

पुनः पाशैर्दृढैर्बद्ध्वा अन्यस्यामसृजद्वशी
तस्यां विपाशः संवृत्तो विपाशा साभवत्ततः ५

ततोऽटवीं समासाद्य निराहारो जितेन्द्रियः
वायुभक्षस्तदा तस्थौ स्वं देहं परितापयन् ६

अथ शुश्राव वेदानां ध्वनिमेकस्य सुस्वरम्
अधीयानस्य तत्राशु ध्यानमेवान्वपद्यत ७

अथैनं चारुसर्वाङ्गी पीनोन्नतपयोधरा
उपतस्थेऽग्रतः पत्नी शक्तेर्दीनाननेक्षणा ८

तामुवाच कुतस्त्वं वै कस्यैष श्रूयते ध्वनिः
सोवाच दीनया वाचा रुदती श्वशुरं तदा ९

अदृश्यन्त्युवाच
यदैव सुतदुःखेन निर्गतोऽस्याश्रमाद्गुरो
तदाप्रभृत्येवादृश्या भगवन्तमनुव्रता १०

अधीयानस्य चैवायं ध्वनिः पुत्रस्य ते विभो
उदरस्थस्य ते सूनोर्मा दुःखे त्वं मनः कृथाः ११

सनत्कुमार उवाच
इदानीमस्ति मे वत्से जीविताशेति सोऽब्रवीत्
क्षान्तिं धृतिं च संस्थित्य प्रययावाश्रमं मुनिः १२

तदाश्रमपदं गच्छन्पथि राजानमैक्षत

वसारुधिरदिग्धाङ्गं सौदासं रक्तलोचनम्  १३

अभिद्रवन्तं वेगेन मन्त्रैरस्तम्भयन्मुनिः
ततोऽस्य निर्गतः कायाद्रक्षः परमदारुणः  १४

उवाच चैनं दुष्टात्मन्दहेयं त्वां सबान्धवम्
दग्धेन च त्वया किं मे गच्छ मुक्तोऽसि दुर्मते  १५

ततः स मुक्तो दीनात्मा राक्षसः क्रूरकर्मकृत्
प्रणम्य शिरसा भीतो जगाम कुशिकान्तिकम्  १६

गते निशाचरे राजा प्रणम्य शिरसा मुनिम्
प्रसादयामास तदा स चोवाचेदमर्थवत्  १७

न दोषस्तव राजेन्द्र रक्षसाधिष्ठितस्य वै
कृतान्तेन हताः पुत्रा निमित्तं तत्र राक्षसः  १८

प्रशाधि राज्यं राजेन्द्र पितृपैतामहं विभो
ब्रूहि किं वा प्रियं तेऽद्य करोमि नरपुंगव  १९

राजोवाच
इच्छामि भगवन्पुत्रं त्वयोत्पादितमच्युत
देव्यामस्यां महासत्त्वं तत्कुरुष्व मम प्रियम्  २०

सनत्कुमार उवाच
एवमस्त्वित्यथोक्त्वासौ तस्यां पत्न्यां महाव्रतः
पुत्रं च शोणकं नाम जनयामास निर्वृतः  २१

तं शोणकं ततो राज्ये स्वं पुत्रमभिषिच्य सः
जगाम वनमेवाशु सभार्यस्तपसि स्थितः  २२

वसिष्ठस्यापि कालेन शक्तेः पुत्रः प्रतापवान्
अदृश्यन्त्यां समभवत्पुत्रो नाम्ना पराशरः २३

वसिष्ठं तु तदा धीमांस्तातमेवाभ्यमन्यत
तात तातेति च मुहुर्व्याजहार पितुर्गुरुम् २४

ततः कदाचिद्विज्ञाय भक्षितं रक्षसा शुचिम्
पितरं तपसा मन्त्रैरीजे रक्षःक्रतौ तदा २५

तत्र कोटीः स पञ्चाशद्रक्षसां क्रूरकर्मणाम्
जुहावाग्नौ महातेजास्ततो ब्रह्माभ्यगाद्द्रुतम् २६

सुतमभ्येत्य सम्पूज्य वसिष्ठसहितः प्रभुः
ऋषिभिर्दैवतैश्चैव इदमाह पराशरम् २७

ब्रह्मोवाच
देवतास्ते पतन्ति स्म यज्ञैर्मन्त्रपुरस्कृतैः
अष्टमं स्थानमेतद्धि देवानामाद्यमीदृशम् २८

पराशर उवाच
सह देवैरहं सर्वांल्लोकान्धक्ष्यामि पावकैः
दग्ध्वान्यान्प्रथयिष्यामि तत्र लोकान्न संशयः २९

सनत्कुमार उवाच
तस्यैवं गर्वितं वाक्यं श्रुत्वा देवः पितामहः
उवाच श्लक्ष्णया वाचा सान्त्वयंस्तमिदं वचः ३०

पितामह उवाच
कृतमेतन्न संदेहो यथा ब्रूषे महामते
क्षन्तव्यं सर्वमेतत्तु अस्मत्प्रियचिकीर्षया ३१

यैस्ते पिता महाभाग भक्षितः सह सोदरैः
त एवाग्नौ च होतव्या विश्वामित्रस्य पश्यतः
अन्येषां स्वस्ति सर्वत्र देवानां सह राक्षसैः  ३२

तस्य संकल्पसंतप्तो मन्युमूलमुदाहरत्
वसिष्ठस्य महाभाग त्वं निवारय पुत्रक  ३३

देवाः प्राञ्जलयः सर्वे प्रणेमुस्ते महामुनिम्
ऋषयश्चैव ते सर्वे वाग्भिस्तुष्टुविरे तदा  ३४

ततस्तेषां महातेजा वचांसि प्रत्यपूजयत्
विश्वामित्रस्य मिषत इदं प्रोवाच सुस्वरम्  ३५

य एषां ब्राह्मणो वापि क्षत्रियो वा दुरात्मवान्
रक्षसां पक्षमास्थाय प्रतीकारं करिष्यति  ३६

तमप्यत्रापि संक्रुद्धस्तपोयोगबलान्वितः
विहत्य तपसो योगाद्धोष्ये दीप्ते विभावसौ  ३७

सनत्कुमार उवाच
ततो देवाः सगन्धर्वाः पितामहपुरःसराः
प्रभावं तस्य तं ज्ञात्वा पराशरमपूजयन्  ३८

हुतेषु च ततस्तेषु राक्षसेषु दुरात्मसु
संजहार ततः सत्रं ब्रह्मणोऽनुमते तदा  ३९

सनत्कुमार उवाच
य इमं श्राद्धकाले वा दैवे कर्मणि वा द्विजान्
श्रावयीत शुचिर्भूत्वा न तं हिंसन्ति राक्षसाः  ४०

पराशरस्येदमदीनसम्भवं विशुद्धवाक्कर्मविधानसम्भवम्

निशाम्य विप्रः कुलसिद्धिसम्भवं न राक्षसं गच्छति योनिसम्भवम् ४१
इति स्कन्दपुराणेऽष्टादशमोऽध्यायः

स्कन्दपुराण १९

सनत्कुमार उवाच
एवं तव पिता व्यास रक्षःसत्त्रं समाहरत्
समापयित्वा च पुनस्तपस्तेपे च भास्वरम् १

तमागत्य वसिष्ठस्तु तपसा भास्करद्युतिम्
उवाच प्रीतिसम्पन्नमिदमर्थवदव्ययः २

वसिष्ठ उवाच
पितरः पुत्रकामा वै तपः कृत्वातिदुश्चरम्
पुत्रमुत्पादयन्ति स्म तपोज्ञानसमन्वितम् ३

अयं नः संततिं चैव ज्ञानवांस्तपसान्वितः
करिष्यति गतिं चैव इति वेदविदो विदुः ४

स त्वं तपोन्वितश्चैव ज्ञानवान्यशसान्वितः
पुत्रः पुत्रवतां श्रेष्ठो विहीनः प्रजया विभो ५

तस्मात्पितृणामानृण्यं गच्छ व्रतवतां वर
सुतमुत्पादय क्षिप्रमधिकं सममेव वा ६

सनत्कुमार उवाच
स एवमुक्तस्तेजस्वी वसिष्ठेनामितात्मना
मैनाकं पर्वतं प्राप्य तपस्तेपे सुदुश्चरम् ७

तस्य कालेन महता तपसा भावितस्य तु
उमापतिर्वरं प्रादात्स च वव्रे सुतं शुभम् ८

स लब्धवर आगम्य ययाचे पुत्रकारणात्
क्षेत्रं सुपरिशुद्धं च स्वपुत्रो यत्र सम्भवेत् ९

सम्भ्रमन्दाशराजस्य दुहितृत्वमुपागताम्
पितृकन्यां ततः कालीमपश्यद्दिव्यरूपिणीम् १०

मत्सीगर्भसमुत्पन्नां वसोर्बीजाशनात्पुरा
अद्रिकामप्सरःश्रेष्ठां ब्रह्मतेजोमयीं शुभाम् ११

तस्यां स जनयामास वरं दत्त्वा महातपाः
भवन्तं तपसां योनिं श्रौतस्मार्तप्रवर्तकम् १२

तव पुत्रोऽभवच्चापि शुको योगविदां वरः
तस्य पुत्राश्च चत्वारः कन्या चैका सुमध्यमा १३

व्यास उवाच
कथं वैरं समभवद्विश्वामित्रवसिष्ठयोः
कथं चापगतं भूय एतदिच्छामि वेदितुम् १४

सनत्कुमार उवाच
पराशरे तु गर्भस्थे विप्रत्वं गाधिजे गते
सरस्वत्यां कुरुक्षेत्रे द्वयोरप्याश्रमौ तयोः १५

तत्र वैरमनुस्मृत्य विश्वामित्रेण धीमता
मिषतस्तु वसिष्ठस्य हतं पुत्रशतं रुषा १६

मुनिरप्याह तत्रासौ विश्वामित्रः प्रतापवान्
सरस्वतीमथैकान्ते वसिष्ठं मे महापगे
स्रोतसा महताक्षिप्य स्नायमानमिहानय १७

सैवमुक्ता तु तं गत्वा वसिष्ठं प्राह दुःखिता

यदुक्तवांस्तु गाधेयः स चोवाच महानदीम्  १८

एवं कुरु महाभागे मां नयस्व यथेप्सितम्
मा ते क्रूरः स गाधेयः शापं दद्यात्सुदुस्तरम्  १९

सनत्कुमार उवाच
गाधेयस्य ततः सा तु जुह्वतोऽग्निं दिवाकरे
मध्यं प्राप्तेऽनयद्वेगाद्वसिष्ठं स्रोतसा शुभा  २०

तं दृष्ट्वापहृतं व्यास स्रोतसा मुनिसत्तमम्
उवाच च्छद्मना यस्माद्वेगेनापहृतस्त्वया
तस्मात्त्वं कर्मणानेन सासृक्तोया भविष्यसि  २१

विश्वामित्रेण सा शप्ता नदी लोकसुखप्रदा
अवहद्रुधिरं चैव मांसमेदस्तथैव च  २२

अथ तीर्थप्रसङ्गेन मुनिभिः समुपागतैः
अनुग्रहः कृतस्तस्या येन स्वच्छजलाभवत्  २३

महतस्तपसः शक्त्या कालेन महता तदा
वसिष्ठस्य च तां क्षान्तिं ज्ञात्वा स ऋषिपुंगवः  २४

विश्वामित्रो महातेजा वसिष्ठे वैरमत्यजत्
एवं तौ वैरमन्योन्यं जहतुर्मुनिसत्तमौ  २५

सनत्कुमार उवाच
य इमं शृणुयान्नित्यं ब्राह्मणाञ्छ्रावयीत वा
स दुस्तराणि दुर्गाणि तरत्यश्रान्तपौरुषः  २६

ह्रीपौरुषौदार्यविहारसत्त्वैः समन्वितः सोज्ज्वलचारुवेषः
भवेच्च सर्वामरराजतुल्यस्त्रिपिष्टपे क्रीडति चेच्छया स्वयम्  २७

एवं तदभवद्व्यास विश्वामित्रवसिष्ठयोः
वैरं समाप्तं लोकानां हितार्थं पुनरेव च २८

इति स्कन्दपुराणे ऊनविंशतितमोऽध्यायः

## स्कन्दपुराण २०

व्यास उवाच
उमाहरौ तु देवेशौ चक्रतुर्यच्च संगतौ
तन्मे सर्वमशेषेण कथयस्व महामुने १

सनत्कुमार उवाच
उमाहरौ तु संगम्य परस्परमनिन्दितौ
शालङ्कस्यान्वये विप्रं युयुजाते वरेण ह २

स चाप्ययोनिजः पुत्र आराध्य परमेश्वरम्
रुद्रेण समतां लब्ध्वा महागणपतिर्बभौ ३

व्यास उवाच
कथं नन्दी समुत्पन्नः कथं चाराध्य शंकरम्
समानत्वमगाच्छम्भोः प्रतीहारत्वमेव च ४

सनत्कुमार उवाच
अभूदृषिः स धर्मात्मा शिलादो नाम वीर्यवान्
तस्याभूच्छिलकैर्वृत्तिः शिलादस्तेन सोऽभवत् ५

अपश्यल्लम्बमानांस्तु गर्तायां स पितृन्द्विजः
विच्छिन्नसंततीन्घोरं निरयं वै प्रपेतुषः ६

तैरुक्तोऽपत्यकामैस्तु देवं लोकेशमव्ययम्
आराधय महादेवं सुतार्थं द्विजसत्तम ७

तस्य वर्षसहस्रेण तप्यमानस्य शूलधृक्
शर्वः सोमो गणवृतो वरदोऽस्मीत्यभाषत ८

तं दृष्ट्वा सोममीशेशं प्रणतः पादयोर्विभोः
हर्षगद्गदया वाचा तुष्टाव विबुधेश्वरम् ९

नमः परमदेवाय महेशाय महात्मने
स्रष्ट्रे सर्वसुरेशानां ब्रह्मणः पतये नमः १०

नमः कामाङ्गनाशाय योगसम्भवहेतवे
नमः पर्वतवासाय ध्यानगम्याय वेधसे ११

ऋषीणां पतये नित्यं देवानां पतये नमः
वेदानां पतये चैव योगिनां पतये नमः १२

प्रधानाय नमो नित्यं तत्त्वायामरसंज्ञिणे
वरदाय च भक्तानां नमः सर्वगताय च १३

तन्मात्रेन्द्रियभूतानां विकाराणां गुणैः सह
स्रष्ट्रे च पतये चैव नमश्च प्रभविष्णवे १४

जगतः पतये चैव जगत्स्रष्ट्रे नमः सदा
प्रकृतेः पतये नित्यं पुरुषात्परगामिने १५

ईश्वराय नमो नित्यं योगगम्याय रंहसे
संसारोत्पत्तिनाशाय सर्वकामप्रदाय च १६

शरण्याय नमो नित्यं नमो भस्माङ्गरागिणे
नमस्तेऽयोग्रहस्ताय तेजसां पतये नमः १७

सूर्यानिलहुताशाम्बुचन्द्राकाशधराय च

स्थिताय सर्वदा नित्यं नमस्त्रैलोकवेधसे  १८

स्तोतव्यस्य कुतो देव विश्रामस्तव विद्यते
यदा हेतुस्त्वमेवास्य जगतः स्थितिनाशयोः  १९

अशरण्यस्य देवेश त्वत्तश्च शरणार्थिनः
प्रसादं परमालम्ब्य वरदो भव विश्वकृत्  २०

सनत्कुमार उवाच
यः स्तोत्रमेतदखिलं पठते द्विजन्मा प्रातः शुचिर्नियमवान्पुरतो द्विजानाम्
तं ब्रह्मराक्षसनिशाचरभूतयक्षा हिंसन्ति नो द्विपदपन्नगपूतनाश्च  २१

ततः स भगवान्देवः स्तूयमानः सहोमया
उवाच वरदोऽस्मीति ब्रूहि यत्ते मनोगतम्  २२

तमेवंवादिनं देवं शिलादोऽभ्यर्चयत्तदा
उवाच चेदं देवेशं स वाचा सज्जमानया  २३

भगवन्यदि तुष्टोऽसि यदि देयो वरश्च मे
इच्छाम्यात्मसमं पुत्रं मृत्युहीनमयोनिजम्  २४

एवमुक्तस्ततो देवः प्रीयमाणस्त्रिलोचनः
एवमस्त्विति तं प्रोच्य तत्रैवान्तरधीयत  २५

गते तस्मिन्महेष्वासे ऋषिः परमपूजितः
स्वमाश्रममुपागम्य ऋषिभ्योऽकथयत्ततः  २६

तैः प्रशस्तस्ततश्चैव कालेन मुनिसत्तम
यियक्षुर्यज्ञभूमिं स्वां लाङ्गलेन चकर्ष ताम्  २७

तस्यां तु कृष्यमाणायां सीतायां तत्समुत्थितः

संवर्तकानलप्रख्यः कुमारः प्रत्यदृश्यत २८

स तं दृष्ट्वा तथोद्भूतं कुमारं दीप्ततेजसम्
राक्षसोऽयमिति ज्ञात्वा भयान्नोपससार तम् २९

कुमारोऽपि तथोद्भूतः पितरं दीप्ततेजसम्
उपासर्पत दीनात्मा तात तातेति चाब्रवीत् ३०

स तातेत्युच्यमानोऽपि यदा तं नाभ्यनन्दत
ततो वायुस्तमाकाशे शिलादं प्राह सुस्वरम् ३१

वायुरुवाच
शालङ्कायन पुत्रस्ते योऽसौ देवेन शम्भुना
अयोनिजः पुरा दत्तः स एष प्रतिनन्दय ३२

यस्मान्नन्दीकरस्तेऽयं सदैव द्विजसत्तम
तस्मान्नन्दीति नाम्नायं भविष्यति सुतस्तव ३३

सनत्कुमार उवाच
ततः स वायुवचनान्नन्दिनं परिषस्वजे
गृहीत्वा चाश्रमं स्वेन सोऽनयत्तुष्टिवर्धनम्
चूडोपनयनादीनि कर्माण्यस्य चकार सः ३४

कृत्वा चाध्यापयामास वेदान्साङ्गानशेषतः
आयुर्वेदं धनुर्वेदं गान्धर्वं शब्दलक्षणम् ३५

हस्तिनां चरितं यच्च नरनार्योश्च लक्षणम्
शिल्पानि चैव सर्वाणि निमित्तज्ञानमेव च ३६

भूतग्रामचिकित्सां च मातृणां चरितं च यत्
भुजंगानां च सर्वेषां यच्च किंचिद्विचेष्टितम्

अब्दैरधीतवान्सर्वं व्यास पञ्चभिरेव च  ३७

दक्षः शुचिरदीनात्मा प्रियवागनसूयकः
सर्वलोकप्रियो नित्यं मनोनयननन्दनः  ३८

तस्याथ सप्तमे वर्षे ऋषी दिव्यौ तपोधनौ
आश्रमं समनुप्राप्तौ शिलादस्य महौजसौ  ३९

तावभ्यर्च्य यथान्यायं शिलादः सुमहातपाः
सुखासीनौ समालक्ष्य आसने परमार्चितौ  ४०

मित्रावरुणनामानौ तपोयोगबलान्वितौ
अभिज्ञौ सर्वभूतानां त्रैलोक्ये सचराचरे  ४१

ताभ्यामनुज्ञातश्चैव निषसाद वरासने
उपविष्टस्ततः प्रीत इष्टाभिर्वाग्भिरस्तुवत्  ४२

ताभ्यां पृष्टश्च कच्चित्ते पुत्रस्तुष्टिप्रदः शुभः
स्वाध्यायनियतः कच्चित्कच्चिद्धर्मस्य संततिः  ४३

कच्चिन्न वृद्धान्बालो न गुरून्वाप्यवमन्यते
कच्चिन्नियमवांश्चैव कच्चित्तुष्टिप्रदः सताम्  ४४

स एवमुक्तस्तेजस्वी शिलादः पुत्रवत्सलः
उवाच गुणवान्सम्यक्कुलवंशविवर्धनः  ४५

तमाहूय स तुष्ट्या तु पुत्रं नन्दिनमच्युतम्
तयोः पादेषु शिरसा अपातयत नन्दिनम्  ४६

तौ तु तस्याशिषं देवौ प्रयुङ्क्तो धर्मनित्यताम्
गुरुशुश्रूषणे भावं लोकांश्चैव तथाक्षयान्  ४७

सनत्कुमार उवाच
शिलादस्तामथालक्ष्य आशिषं देवयोस्तदा
विसृज्य नन्दिनं भीतः सोऽपृच्छदृषिसत्तमौ ४८

शिलाद उवाच
भगवन्तावृषी सत्यौ गतिज्ञौ सर्वदेहिनाम्
किमर्थं मम पुत्रस्य दीर्घमायुरुभावपि
प्रयुक्तवन्तौ सम्यक्तु नाशिषं मुनिसत्तमौ ४९

मित्रावरुणावूचतुः
तवैष तनयस्तात अल्पायुः सर्वसंमतः
अतोऽन्यद्वर्षमेकं वै जीवितं धारयिष्यति ५०

सनत्कुमार उवाच
ततः स शोकसंतप्तो न्यपतद्भुवि दुःखितः
विसृज्य ऋषिशार्दूलावेकाकी विललाप च ५१

तस्य शोकाद्विलपतः स्वरं श्रुत्वा सुतः शुभः
नन्द्यागात्तमथापश्यत्पितरं दुःखितं भृशम् ५२

नन्द्युवाच
केन त्वं तात दुःखेन दूयमानः प्ररोदिषि
दुःखं ते कुत उद्भूतं ज्ञातुमिच्छाम्यहं पितः ५३

शिलाद उवाच
पुत्र त्वं किल वर्षेण जीवितं सम्प्रहास्यसि
ऊचतुस्तावृषीत्येवं ततो मां कृच्छ्रमाविशत् ५४

नन्द्युवाच
सत्यं देवऋृषी तात न तावनृतमूचतुः
तथापि तु न मृत्युर्मे प्रभविष्यति मा शुचः ५५

शिलाद उवाच
किं तपः किं परिज्ञानं को योगः कः श्रमश्च ते
येन त्वं मृत्युमुद्युक्तं वञ्चयिष्यसि कथ्यताम्  ५६

नन्द्युवाच
न तात तपसा मृत्युं वञ्चयिष्ये न विद्यया
महादेवप्रसादेन मृत्युं जेष्यामि नान्यथा  ५७

द्रक्ष्यामि शंकरं देवं ततो मृत्युर्न मे भवेत्
नष्टे मृत्यौ त्वया सार्धं चिरं वत्स्यामि निर्वृतः  ५८

शिलाद उवाच
मया वर्षसहस्रेण तपस्तप्त्वा सुदुश्चरम्
महादेवः पुरा दृष्टो लब्धस्त्वं मे यतः सुतः  ५९

भवांस्तु वर्षैरेकेन तपसा नातिभावितः
कथं द्रष्टा महादेवमेतदिच्छामि वेदितुम्  ६०

नन्द्युवाच
न तात तपसा देवो दृश्यते न च विद्यया
शुद्धेन मनसा भक्त्या दृश्यते परमेश्वरः  ६१

त्वया विसृष्टो गत्वाहमचिरेण त्रिलोचनम्
द्रष्टा तात न संदेहो विसृजाशु ततस्तु माम्  ६२

तिष्ठन्तं मां यमोऽभ्येत्य पश्यतस्तेऽभिसंमतम्
न हिंसति तथा तस्मादितस्तात व्रजाम्यहम्  ६३

तिष्ठन्तं वा शयानं वा धावन्तं पतितं तथा
न प्रतीक्षति वै मृत्युरिति बुद्ध्वा शमं व्रज  ६४

अवतीर्य जलं दिव्यं भावं शुद्धं समास्थितः
अभ्यस्य रौद्रमध्यायं ततो द्रक्ष्यामि शंकरम्  ६५

जपतश्चापि युक्तस्य रुद्रभावार्पितस्य च
न मृत्युकाला बहवः करिष्यन्ति मम व्यथाम्  ६६

सनत्कुमार उवाच
तमेवंवादिनं मत्वा ब्रुवाणं शुद्धया गिरा
व्यसर्जयददीनात्मा कृच्छ्रात्पुत्रं महातपाः  ६७

अभिवन्द्य पितुः पादौ शिरसा स महायशाः
प्रदक्षिणं समावृत्य सम्प्रतस्थेऽतिनिश्चितः  ६८

अभिवाद्य ऋषीन्सर्वान्स दिदृक्षुरुदारधीः
मुनिः स देवमगमत्प्रणतार्तिहरं हरम्  ६९

इति स्कन्दपुराणे विंशतितमोऽध्यायः

## स्कन्दपुराण २१

सनत्कुमार उवाच
निर्गतोऽथ ततो नन्दी जगाम सरितां वराम्
भुवनामिति विख्यातां सर्वलोकसुखावहाम्  १

तां प्रविश्य ततो धीमानेकाग्रो ह्रदमास्थितः
स जजाप तदा रुद्रान्मृत्योर्भीतः समाहितः  २

जपता तेन तत्रैव तत्परेण तदाशिषा
कोटिरेका यदा जप्ता तदा देवस्तुतोष ह  ३

तमागत्याह भगवाञ्छर्व उग्रः कपर्दिमान्
नन्दिंस्तुष्टोऽस्मि भद्रं ते वरं वृणु यथेप्सितम्  ४

उवाच प्रणतो भूत्वा प्रणतार्तिहरं हरम्
द्वितीयां जप्तुमिच्छामि कोटिं भगवतां विभो
एवमस्त्विति देवोऽपि प्रोच्यागच्छद्यथागतम् ५

सनत्कुमार उवाच
सोऽवतीर्य ततो भूयः प्रयतात्मा तथैव ह
जजाप कोटिमन्यां तु रुद्रमेवानुचिन्तयन् ६

द्वितीयायां ततः कोटयां सम्पूर्णायां वृषध्वजः
अभ्याजगाम तं चैव वरदोऽस्मीत्यभाषत ७

स प्राह भगवन्कोटिं तृतीयामपि कालहन्
जप्तुमिच्छामि देवेश त्वत्प्रसादादहं विभो ८

एवमस्त्विति भूयोऽपि भगवान्प्रत्युवाच ह
उक्त्वा जगाम स्वं वेश्म देव्या सह महाद्युतिः ९

ततस्तृतीयां रुद्राणां कोटिमन्यां जजाप ह
युगान्तादित्यसंकाशस्ततः समभवद्द्विजः १०

तस्य कोटीत्रये व्यास समाप्ते ज्वलनत्विषः
सोमः सह गणैर्देवस्तं देशमुपचक्रमे ११

स तं करेण संगृह्य उद्धृत्य सलिलाच्च ह
संमृजानोऽग्रहस्तेन नन्दिनं कालहाब्रवीत् १२

देव उवाच
शैलादे वरदोऽहंते तपसानेन तोषितः
साधु जप्तं त्वया धीमन्ब्रूहि यत्ते मनोगतम् १३

शैलादिरुवाच

जपेयं कोटिमन्यां तु भूयोऽपि तव तेजसा
वरमेतं वृणे देव यदि तुष्टोऽसि मे विभो १४

भगवानुवाच
किं ते जप्तेन भूयोऽपि तुष्टोऽस्मि तव सर्वथा
यद्यत्त्वं वृणुषे कामं सर्वं तत्प्रददानि ते १५

ब्रह्मत्वमथ विष्णुत्वमिन्द्रत्वमथ वायुताम्
आदित्यो भव रुद्रो वा ब्रूहि किं वा ददानि ते १६

सनत्कुमार उवाच
स एवमुक्तो देवेन शिरसा पादयोर्नतः
तुष्टाव पुरकामाङ्गक्रतुपर्वतनाशनम् १७

नन्द्युवाच
नमो देवातिदेवाय महादेवाय वै नमः
नमः कामाङ्गनाशाय नीलकण्ठाय वै नमः १८

नमस्तुषितनाशाय त्रैलोक्यदहनाय च
नमः कालोग्रदण्डाय उग्रदण्डाय वै नमः १९

नमो नीलशिखण्डाय सहस्रशिरसे नमः
सहस्रपाणये चैव सहस्रचरणाय च २०

सर्वतःपाणिपादाय सर्वतोक्षिमुखाय च
सर्वतःश्रुतये चैव सर्वमावृत्य तिष्ठते २१

नमस्ते रुक्मवर्णाय तथैवातीन्द्रियाय च
नमः कनकलिङ्गाय सर्वलिङ्गाय वै नमः २२

नमश्चन्द्रार्कवर्णाय योगेशायाजिताय च

पिनाकपाणये चैव शूलमुद्गरपाणये २३

गदिने खड्गिने चैव परश्वधधराय च
रथिने वर्मिणे चैव महेष्वासाय वै नमः २४

नमस्त्रिशूलहस्ताय उग्रदण्डधराय च
नमो गणाधिपतये रुद्राणां पतये नमः २५

नमः सहस्रनेत्राय शतनेत्राय वै नमः
आदित्यानां च पतये वसूनां पतये नमः २६

नमः पृथिव्याः पतये आकाशपतये नमः
नमः स्वर्लोकपतये उमायाः पतये नमः २७

नमो योगाधिपतये सर्वयोगप्रदाय च
ध्यानिने ध्यायमानाय ध्यानिभिः संस्तुताय च २८

मृत्यवे कालदण्डाय यमाय च महात्मने
देवाधिपतये चैव दिव्यसंहननाय च २९

यज्ञाय वसुदानाय स्वर्गायाजन्मदाय च
सवित्रे सर्वदेवानां धर्मायानेकरूपिणे ३०

अमृताय वरेण्याय सर्वदेवस्तुताय च
ब्रह्मणश्च शिरोहर्त्रे यज्ञस्य च महात्मनः ३१

त्रिपुरघ्नाय चोग्राय सर्वाशुभहराय च
उमादेहार्धरूपाय ललाटनयनाय च ३२

महिषान्धकभेत्ताय त्वष्ट्रे वै परमेष्ठिने
ब्रह्मणो गुरवे चैव ब्रह्मणो जनकाय च ३३

कुमारगुरवे चैव कुमारवरदाय च
हलिने मुषलघ्नाय महाहासाय वै नमः ३४

मृत्युपाशोग्रहस्ताय तक्षकब्रह्मसूत्रिणे
सविद्युद्धनवाहाय तथैव वृषयायिने ३५

हिमवद्विन्ध्यवासाय मेरुपर्वतवासिने
कैलासवासिने चैव धनेश्वरसखाय च ३६

विष्णोर्देहार्धदत्ताय तस्यैव वरदाय च
सर्वभूतासमज्ञाय सर्वभूतानुकम्पिने ३७

अन्तर्भूताधिभूताय प्राणिनां जीवदाय च
मनसे मन्यमानाय अतिमानाय चैव हि ३८

बुध्यमानाय बुद्धाय द्रष्ट्रे वै चक्षुषे नमः
नमस्ते स्पर्शयित्रे च तथैव स्पर्शनाय च ३९

नमस्ते रसयित्रे च तथैव रसनाय च
नमो घ्राणाय घ्रात्रे च श्रोत्रे श्रोत्राय चैव हि
हस्तिने चैव हस्ताय तथा पादाय पादिने ४०

नमोऽस्त्वानन्दकर्त्रे च आनन्दाय च वै नमः
वाचेऽथ वाग्मिने चैव तन्मात्राय महात्मने ४१

सूक्ष्माय चैव स्थूलाय सत्त्वाय रजसे नमः
नमश्च तमसे नित्यं क्षेत्रज्ञायाजिताय च ४२

विष्णवे लोकतन्त्राय प्रजानां पतये नमः
मनवे सप्तऋषये तप्यमानाय तापिने ४३

ब्रह्मण्यायाथ शुद्धाय तथा दुर्वाससे नमः
शिल्पिने शिल्पनाथाय विदुषे विश्वकर्मणे ४४

अत्रये भृगवे चैव तथैवाङ्गिरसे नमः
पुलहाय पुलस्त्याय क्रतुदक्षानलाय च ४५

धर्माय रुचये चैव वसिष्ठाय नमोऽस्तु ते
भूताय भूतनाथाय कुष्माण्डपतये नमः ४६

तिष्ठते द्रवते चैव गायते नृत्यतेऽपि च
अवश्यायाप्यवध्याय अजरायामराय च ४७

अक्षयायाव्ययायैव तथाप्रतिहताय च
अनावेश्याय सर्वेषां दृश्यायादृश्यरूपिणे ४८

सूक्ष्मेभ्यश्चापि सूक्ष्माय सर्वगाय महात्मने
नमस्ते भगवंस्त्र्यक्ष नमस्ते भगवञ्छिव
नमस्ते सर्वलोकेश नमस्ते लोकभावन ४९

न मे देवाधिपत्येन ब्रह्मत्वेनाथवा पुनः
न विष्णुत्वेन देवेश नापीन्द्रत्वेन भूतप
इच्छाम्यहं तवेशान गणत्वं नित्यमव्ययम् ५०

नित्यं त्वां सगणं साम्बं प्रसन्नं सपरिच्छदम्
द्रष्टुमिच्छामि देवेश एष मे दीयतां वरः ५१

त्वं नो गतिः पुरा देव त्वं चैवार्तायनं प्रभुः
शरणं च त्वमेवाथ नान्यं पश्यामि कर्हिचित् ५२

त्वया त्यक्तस्य चैवाशु विनाशो नात्र संशयः
अन्यां गतिं न पश्यामि यस्या आत्यन्तिकं शुभम् ५३

अनुरक्तं च भक्तं च त्वत्परं त्वदपाश्रयम्
प्रतीच्छ मां सदा देव एष मे दीयतां वरः ५४

सनत्कुमार उवाच
य इमं प्रातरुत्थाय पठेदविमना नरः
स देहभेदमासाद्य नन्दीश्वरसमो भवेत् ५५

यश्चेमं शृणुयान्नित्यं श्रावयेद्वा द्विजातिषु
सोऽश्वमेधफलं प्राप्य रुद्रलोके महीयते ५६

श्रुत्वा सकृदपि ह्येतं स्तवं पापप्रणाशनम्
यत्र तत्र मृतो व्यास न दुर्गतिमवाप्नुयात् ५७

योऽधीत्य नित्यं स्तवमेतमग्र्यं देवं सदाभ्यर्चयते यतात्मा
किं तस्य यज्ञैर्विविधैश्च दानैस्तीर्थैः सुतप्तैश्च तथा तपोभिः ५८

इति स्कन्दपुराण एकविंशतिमोऽध्यायः

स्कन्दपुराण २२

सनत्कुमार उवाच
ततस्तु देवदेवेशो भक्त्या परमया युतम्
अश्रुपूर्णेक्षणं दीनं पादयोः शिरसा नतम् १

कराभ्यां सुसुखाभ्यां तु संगृह्य परमार्तिहा
उत्थाप्य नयने सोमः अश्रुपूर्णे ममार्ज ह २

उवाच चैनं तुष्टात्मा वचसाप्याययन्निव
निरीक्ष्य गणपान्सर्वान्देव्या सह तदा प्रभुः ३

देव उवाच
जाने भक्तिं तव मयि जाने चार्तिं तवानघ
तस्य सर्वस्य शैलादे उदर्कं संनिशामय ४

अमरो जरया त्यक्तो नित्यं दुःखविवर्जितः
अक्षयश्चाव्ययश्चैव सपिता ससुहृज्जनः  ५

ममेष्टो गणपश्चैव मद्वीर्यो मत्पराक्रमः
इष्टो मम सदा चैव मम पार्श्वगतः सदा
मद्रूपश्चैव भविता महायोगबलान्वितः  ६

ऋद्धिमच्चैव ते द्वीपं क्षीरोदममृताकरम्
संवासं सम्प्रयच्छामि तत्र रंस्यसि सर्वदा  ७

कुशेशयमयीं मालामवमुच्यात्मनस्ततः
आबबन्ध महातेजा नन्दिने दिव्यरूपिणीम्  ८

स तया मालया नन्दी बभौ कण्ठावसक्तया
त्र्यक्षो दशभुजः श्रीमान्द्वितीय इव शंकरः  ९

ततस्तं वै समादाय हस्तेन भगवान्हरः
उवाच ब्रूहि किं तेऽद्य ददानि वरमुत्तमम्  १०

आश्रमश्चायमत्यर्थं तपसा तव भावितः
जप्येश्वर इति ख्यातो मम गुह्यो भविष्यति  ११

समन्ताद्योजनं क्षेत्रं दिव्यं देवगणैर्वृतम्
सिद्धचारणसंकीर्णमप्सरोगणसेवितम्
सिद्धिक्षेत्रं परं गुह्यं भविष्यति न संशयः  १२

कर्मणा मनसा वाचा यत्किंचित्कुरुते नरः
शुभं वाप्यशुभं वात्र सर्वं भवितृ तच्छुभम्  १३

जाप्यं मानसं तुल्यं वै रुद्राणां तद्भविष्यति
यत्र तत्र मृता मर्त्या यास्यन्ति तव लोकताम्  १४

ततो जटास्रुतं वारि गृहीत्वा हारनिर्मलम्
उक्त्वा नदी भवस्वेति विससर्ज महातपाः १५

सा ततो दिव्यतोया च पुण्या मणिजला शुभा
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता
पद्मोत्पलवनोपेता प्रावर्तत महानदी १६

स्त्रीरूपधारिणी चैव प्राञ्जलिः शिरसा नता
पद्मोत्पलदलाभाक्षी महादेवमुपस्थिता १७

तामुवाच ततो देवो नदीं स्वयमुपस्थिताम्
यस्माज्जटोदकाद्देवि प्रवृत्ता त्वं शुभानने
तस्माज्जटोदा नाम्ना त्वं भविष्यसि सरिद्वरा १८

त्वयि स्नानं तु यः कुर्याच्छुचिः प्रयतमानसः
सोऽश्वमेधफलं प्राप्य रुद्रलोके महीयते १९

सनत्कुमार उवाच
ततो देव्या महादेवो नन्दीश्वरमतिप्रभम्
पुत्रस्तेऽयमिति प्रोच्य पादयोस्तं व्यनामयत् २०

सा तमाघ्राय शिरसि पाणिभ्यां परिमार्जती
पुत्रप्रेम्णाभ्यषिञ्चत्तं स्रोतोभिः स्तनजैस्त्रिभिः
पयसा शङ्खगौरेण देवी देवं निरीक्षती २१

तानि स्रोतांसि त्रीण्यस्याः स्रुतान्योघवती नदी
नदीं त्रिस्रोतसीं पुण्यां ततस्तामवदद्धरः २२

त्रिस्रोतसं नदीं दृष्ट्वा वृषः परमहर्षितः
ननर्द नादात्तस्माच्च सरिदन्या ततोऽभवत् २३

यस्माद्वृषभनादेन प्रवृत्ता सा महानदी
तस्माड्ढित्किरिकां तां वै उवाच वृषभध्वजः  २४

जाम्बूनदमयं चित्रं स्वं देवः परमाद्भुतम्
मुकुटं चाबबन्धास्मै कुण्डले चामृतोद्भवे  २५

तं तथाभ्यर्चितं व्योम्नि दृष्ट्वा मेघः प्रभाकरः
देवोपवाह्यः सिषिचे सनादः सतडिद्गुणः  २६

तस्याभिषिक्तस्य तदा प्रवृत्ते स्त्रोतसी भृशम्
यस्मात्सुवर्णान्निःसृत्य नद्येका सम्प्रवर्तत
स्वर्णोदकेति नाम्ना तां महादेवोऽभ्यभाषत  २७

जाम्बूनदमयाद्यस्माद्द्वितीया मुकुटाच्छुभात्
प्रावर्तत नदी पुण्या ऊचुर्जम्बूनदीति ताम्  २८

एतत्पञ्चनदं नाम जप्येश्वरसमीपगम्
व्याख्यातं फलमेतासां जटोदायां महात्मना  २९

तच्च पञ्चनदं दिव्यं देवं जप्येश्वरं च तम्
त्रिरात्रोपोषितो गत्वा स्नात्वाभ्यर्च्य च शूलिनम्  ३०

नन्दीश्वरस्यानुचरः क्षीरोदनिलयो भवेत्  ३१

यस्तु जप्येश्वरे प्राणान्परित्यजति दुस्त्यजान्
नियमेनान्यथा वापि स मे गणपतिर्भवेत्  ३२

नन्दीश्वरसमो नित्यः शाश्वतः ऋक्षयोऽव्ययः
मम पार्श्वादनपगः प्रियः संमत एव च  ३३

जप्येश्वरं पञ्चनदं च तद्वै यो मानवोऽभ्येत्य जहाति देहम्

स मे सदा स्याद्गणपो वरिष्ठस्त्वया समः कान्तिवपुश्च नित्यम्  ३४

इति स्कन्दपुराणे द्वाविंशतिमोऽध्यायः

स्कन्दपुराण २३

सनत्कुमार उवाच
ते गणेशा महासत्त्वाः सर्वे देवेश्वरेश्वराः
प्रणम्य देवं देवीं च इदं वचनमब्रुवन्  १

भगवन्देवतारिघ्न देवदेवाम्बिकापते
किमर्थं वयमाहूता आज्ञापय कृतं हि तत्  २

किं सागराञ्छोषयामो यमं वा सह किंकरैः
हन्मो मृत्युमुतामृत्युर्न भवत्वद्य पद्मजः  ३

बद्ध्वेन्द्रं सह देवैश्च सविष्णुं सह वायुना
आनयामः सुसंक्रुद्धा दैत्यान्वा सह दानवैः  ४

कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया
कस्य वाद्योत्सवं देव सर्वकामसमृद्धिमत्  ५

तांस्तथावादिनः सर्वान्नमतो भक्तवत्सलः
उवाच देवः सम्पूज्य गणान्गणपतिर्भवः  ६

देव उवाच
शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः
श्रुत्वा च प्रयतात्मानः कुरुध्वं तदशङ्किताः  ७

नन्दीश्वरोऽयं पुत्रो नः सर्वेषामीश्वरेश्वरः
प्रियोऽग्रनायकश्चैव सेनानीर्वः समाहितः  ८

तमिमं मम संदेशाद्यूयं सर्वेऽभिसंमताः

सेनान्यमभिषिञ्चध्वं महायोगपतिं पतिम्  ९

अद्यप्रभृति युष्माकमयं नन्दीश्वरः शुभः
प्रियो गौरवयुक्तश्च सेनानीरमरः प्रभुः  १०

सनत्कुमार उवाच
एवमुक्ते भगवता गणपाः सर्व एव ते
एवमस्त्विति संमन्त्र्य सम्भारानाहरंस्ततः  ११

तस्य रूपाश्रयं दिव्यं जाम्बूनदमयं शुभम्
आसनं मेरुसंकाशं मनोरममथाहरन्  १२

शातकुम्भमयं चापि चारुचामीकरप्रभम्
मुक्तादामावलम्बं च मणिरत्नावभासितम्  १३

स्तम्भैश्च वैडूर्यमयैः किङ्किणीजालसंवृतम्
चारुरत्नकसंयुक्तं मण्डपं विश्वतोमुखम्
कृत्वा चक्रुश्च तन्मध्ये तदासनवरं शुभम्  १४

तस्याग्रतः पादपीठं नीलं वज्रावभासितम्
चक्रुः पादप्रतिष्ठार्थं कलशौ चास्य पार्श्वगौ
सम्पूर्णौ परमाम्भोभिररविन्दावृताननौ  १५

अग्रतोऽग्निं समाधाय वृषभं चापि पार्श्वतः
सवत्सां सुरभिं चापि तस्य पार्श्वेऽथ दक्षिणे  १६

छत्रं शतशलाकं च जाम्बूनदमयं शुभम्
शङ्खहाराम्बुगौरेण पृष्ठेनाभिविराजितम्  १७

व्यजनं चन्द्रशुभ्रं च हेमदण्डं सुचारुमत्
मालां कुशेशयानां च भ्रमरावलिसेविताम्  १८

ग्रानिन्युस्तत्र गणपा नन्द्यावर्तांश्च काञ्चनान्
पुनर्वसुं च पुष्यं च द्वौ मत्स्यौ वरुणालयौ १९

स्वस्तिकं वर्धमानं च श्रीवत्सं चैव काञ्चनम्
कीचका वेणवश्चैव कन्या चैवाभिपूजिता २०

ऐरावतं सुप्रतीकं गजावेतौ च पूजितौ
ध्वजं च पूजितं दिव्यं शङ्खं चैवेन्दुवर्चसम् २१

कलशानां सहस्त्रं च काञ्चनानां सुवर्चसाम्
राजतानां सहस्त्रं च पार्थिवानां तथैव च २२

ताम्राणामथ दिव्यानां सहस्त्रमनलत्विषाम्
वासोयुगं वृक्षजं च विरजः सूक्ष्ममेव च २३

मुकुटं काञ्चनं चैव सुकृतं विश्वकर्मणा
कुण्डले चामले दिव्ये वज्रं चैव वरायुधम् २४

पट्टिसं च महद्दिव्यं शूलं चाशनिमेव च
जाम्बूनदमयं सूत्रं केयूरद्वयमेव च २५

हारं च मणिचित्राङ्गं रोचनारुचकं तथा
नलभां पारियात्रं च वर्षं कङ्कणिमेव च २६

दर्भांश्च दिव्यां समिधमाज्यं धूपमथापि च
समन्तान्निन्युरव्यग्रा गणपा देवसंमताः २७

ततो दिशः समुद्राश्च वरुणः सधनेश्वरः
यमोऽग्निर्वसवश्चैव चन्द्रादित्यौ ग्रहैः सह २८

तारारूपाणि सर्वाणि नक्षत्राणि ध्रुवस्तथा

रुद्रा रक्षांसि यक्षाश्च अश्विनौ दैत्यदानवाः २९

गन्धर्वाप्सरसश्चैव नारदः पर्वतस्तथा
पृथिवी च समुद्राश्च वर्षाणि गिरयस्तथा ३०

वृक्षाश्च वीरुधश्चैव ओषध्यश्च महाबलाः
नद्यः सर्वाः समाजग्मुः पशवश्चैव सर्वशः ३१

लोकस्य मातरश्चैव पृथिवी स्वर्ग एव च
भूतानि प्रकृतिश्चैव इन्द्रियाणि च सर्वशः ३२

तीर्थानि चैव सर्वाणि दानानि विविधानि च
ऋचो यजूंषि सामानि अथर्वाङ्गिरसावपि ३३

यज्ञाश्च क्रतवश्चैव इष्टयो नियमास्तथा
छन्दांसि चैव सर्वाणि पिशाचा देवयोनयः
ब्रह्मा च ऋषयश्चैव विष्णुः सानुचरस्तथा ३४

तेष्वागतेषु सर्वेषु भगवान्गोवृषध्वजः
सर्वकार्यविधिं कर्तुमादिदेश पितामहम् ३५

एकैकं कलशं तत्र सर्वौषधिसमन्वितम्
कृत्वाद्भिः पूरयित्वा च कुशेशयमुखावृतम् ३६

जयां च विजयां चैव सिंहीं व्याघ्रीं तथैव च
सुवर्चलां शङ्खपुष्पीं विष्णुक्रान्तां पुनर्नवाम् ३७

कुमारीं चन्द्रकान्तां च मृतसंजीवनीमपि
आदित्यवर्चसं चैव अमृतां श्रीनिकेतनाम् ३८

तथा कुमुद्वतीं चैव प्राक्षिपंस्तेष्वथौषधीः

पार्थिवेषु तदा व्यास सर्वेष्वेव गणेश्वराः ३९

सौवर्णेषु तु सर्वेषु तीर्थानि विविधानि च
दानानि चैव सर्वाणि भगवान्संन्यवेशयत् ४०

राजतेषु च कुम्भेषु मन्त्रांश्छन्दांसि चैव ह
क्रतूनन्यांश्च विविधा इष्टीः काम्यांस्तथेतरान् ४१

औदुम्बरेषु सर्वेषु सरितः सागरांस्तथा
तपांसि नियमांश्चैव भगवानभ्यविन्यसत् ४२

एकैकं कलशं तत्र अभिपूर्याभिमन्त्र्य च
वेष्टयित्वा च सूत्रेण देवेभ्यः प्रददौ विभुः ४३

स जग्राह तदा ब्रह्मा एकं कलशमात्मना
विष्णवे च ददावेकमेकमिन्द्राय धीमते
गणपेभ्यस्तथा चान्यानृषिभ्यश्च पितामहः ४४

ततस्तमासने तस्मिन्नुपवेश्य महामनाः
अर्चयित्वा ततो ब्रह्मा स्वयमेवाभ्यषिञ्चत ४५

ततो विष्णुस्ततः शक्रो ऋषयश्च सहामरैः
गणाधिपाश्च सर्वे ते अभ्यषिञ्चन्त नन्दिनम् ४६

वासोयुगं च तद्दिव्यं गन्धान्दिव्यांस्तथैव च
केयूरे कुण्डले चैव मुकुटं हारमेव च
पट्टिसं शूलवज्रे च अशनीं च ददौ स्वयम् ४७

छत्त्रं जग्राह देवेन्द्रो वायुर्व्यजनमेव च
ऋषयस्तुष्टुवुश्चैव पितामहपुरोगमाः ४८

विष्णुरुवाच
नमः कुष्माण्डराजाय वज्रोद्यतकराय च
शालङ्कायनपौत्राय हलमार्गोत्थिताय च  ४९

शिलादस्य च पुत्राय रुद्रजप्यकराय च
रुद्रभक्ताय देवाय नमोऽन्तर्जलशायिने  ५०

गणानां पतये चैव भूतानां पतये नमः
उमापुत्राय देवाय पट्टिसायुधधारिणे  ५१

नमो दंष्ट्राकरालाय ललाटनयनाय च
प्रमथाय वरेण्याय ईशानायार्पिताय च  ५२

द्वाराध्यक्षाय शूराय सुयशापतये नमः
नमः प्रवरमालाय क्षीरोदनिलयाय च  ५३

महागणाधिपतये महायोगेश्वराय च
दिण्डिमुण्डाय चण्डाय एकाक्षररताय च  ५४

अक्षयायामृतायैव अजरायामराय च
पशूनां पतये चैव जेत्रे मृत्योस्तथैव च  ५५

नमः पवनवेगाय सर्वज्ञायाजिताय च
अनेकशिरसे चैव अनेकचरणाय च  ५६

किरीटिने कुण्डलिने महापरिघबाहवे
सर्वान्देवान्गणांश्चैव पाहि देव नमोऽस्तु ते  ५७

सनत्कुमार उवाच
एवं स्तुत्वा ततो देवस्तस्मै व्यास महात्मने
प्राञ्जलिः प्रयतो भूत्वा जयशब्दं चकार ह  ५८

ततो गणा जयेत्यूचुस्ततो देवास्ततोऽसुराः
ततः सर्वाणि भूतानि ब्रह्मा शक्रस्तथैव च ५९

ततः शङ्खांश्च भेरींश्च पटहाडम्बरांस्तथा
वंशांश्च पणवांश्चैव कृकवान्गोविषाणिकान् ६०

दिण्डिमान्वेणुकांश्चैव मर्दलांश्चैव सर्वशः
अवादयन्त गणपा हर्षयन्तो मुदा युताः ६१

सनत्कुमार उवाच
नन्दीश्वरस्य य इमं स्तवं देवाभिनिर्मितम्
पठेत सततं मर्त्यः स गच्छेन्मम लोकताम् ६२

नमो नन्दीश्वरायेति कृत्वा यः स्वप्नमाचरेत्
तस्य कुष्माण्डराजेभ्यो न भयं विद्यते क्वचित् ६३

यत्रायं स्थाप्यते नित्यं स्तवः परमपूजितः
न भयं तत्र भवति ग्रहेभ्यो व्यास सर्वदा ६४

नन्दीश्वरं ये प्रणमन्ति मर्त्या नित्यं प्रसन्नेन्द्रियशुद्धसत्त्वाः
ते देवदेवस्य सहाद्रिपुत्र्या इष्टा वरिष्ठाश्च गणा भवन्ति ६५

इति स्कन्दपुराणे चतुर्विंशतिमोऽध्यायः

स्कन्दपुराण २४

सनत्कुमार उवाच
ते गणेशा महासत्त्वाः सर्वे देवेश्वरेश्वराः
प्रणम्य देवं देवीं च इदं वचनमब्रुवन् १

भगवन्देवतारिघ्न देववेवाम्बिकापते
किमर्थं वयमाहूता आज्ञापय कृतं हि तत् २

किं सागराञ्छोषयामो यमं वा सह किंकरैः
हन्मो मृत्युमुतामृत्युर्न भवत्वद्य पद्मजः  ३

बद्ध्वेन्द्रं सह देवैश्च सविष्णुं सह वायुना
आनयामः सुसंक्रुद्धा दैत्यान्वा सह दानवैः  ४

कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया
कस्य वाद्योत्सवं देव सर्वकामसमृद्धिमत्  ५

तांस्तथावादिनः सर्वान्नमतो भक्तवत्सलः
उवाच देवः सम्पूज्य गणान्गणपतिर्भवः  ६

देव उवाच
शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः
श्रुत्वा च प्रयतात्मानः कुरुध्वं तदशङ्किताः  ७

नन्दीश्वरोऽयं पुत्रो नः सर्वेषामीश्वरेश्वरः
प्रियोऽग्रनायकश्चैव सेनानीर्वः समाहितः  ८

तमिमं मम संदेशाद्यूयं सर्वेऽभिसंमताः
सेनान्यमभिषिञ्चध्वं महायोगपतिं पतिम्  ९

अद्यप्रभृति युष्माकमयं नन्दीश्वरः शुभः
प्रियो गौरवयुक्तश्च सेनानीरमरः प्रभुः  १०

सनत्कुमार उवाच
एवमुक्ते भगवता गणपाः सर्व एव ते
एवमस्त्विति संमन्त्र्य सम्भारानाहरंस्ततः  ११

तस्य रूपाश्रयं दिव्यं जाम्बूनदमयं शुभम्
आसनं मेरुसंकाशं मनोरममथाहरन्  १२

शातकुम्भमयं चापि चारुचामीकरप्रभम्
मुक्तादामावलम्बं च मणिरत्नावभासितम् १३

स्तम्भैश्च वैडूर्यमयैः किङ्किणीजालसंवृतम्
चारुरत्नकसंयुक्तं मण्डपं विश्वतोमुखम्
कृत्वा चक्रुश्च तन्मध्ये तदासनवरं शुभम् १४

तस्याग्रतः पादपीठं नीलं वज्रावभासितम्
चक्रुः पादप्रतिष्ठार्थं कलशौ चास्य पार्श्वगौ
सम्पूर्णौ परमाम्भोभिररविन्दावृताननौ १५

अग्रतोऽग्निं समाधाय वृषभं चापि पार्श्वतः
सवत्सां सुरभिं चापि तस्य पार्श्वेऽथ दक्षिणे १६

छत्रं शतशलाकं च जाम्बूनदमयं शुभम्
शङ्खहाराम्बुगौरेण पृष्ठेनाभिविराजितम् १७

व्यजनं चन्द्रशुभ्रं च हेमदण्डं सुचारुमत्
मालां कुशेशयानां च भ्रमरावलिसेविताम् १८

आनिन्युस्तत्र गणपा नन्द्यावर्तांश्च काञ्चनान्
पुनर्वसुं च पुष्यं च द्वौ मत्स्यौ वरुणालयौ १९

स्वस्तिकं वर्धमानं च श्रीवत्सं चैव काञ्चनम्
कीचका वेणवश्चैव कन्या चैवाभिपूजिता २०

ऐरावतं सुप्रतीकं गजावेतौ च पूजितौ
ध्वजं च पूजितं दिव्यं शङ्खं चैवेन्दुवर्चसम् २१

कलशानां सहस्रं च काञ्चनानां सुवर्चसाम्
राजतानां सहस्रं च पार्थिवानां तथैव च २२

ताम्राणामथ दिव्यानां सहस्रमनलत्विषाम्
वासोयुगं वृक्षजं च विरजः सूक्ष्ममेव च २३

मुकुटं काञ्चनं चैव सुकृतं विश्वकर्मणा
कुण्डले चामले दिव्ये वज्रं चैव वरायुधम् २४

पट्टिसं च महद्दिव्यं शूलं चाशनिमेव च
जाम्बूनदमयं सूत्रं केयूरद्वयमेव च २५

हारं च मणिचित्राङ्गं रोचनारुचकं तथा
नलभां पारियात्रं च वर्षं कङ्कणिमेव च २६

दर्भांश्च दिव्यां समिधमाज्यं धूपमथापि च
समन्तान्निन्युरव्यग्रा गणपा देवसंमताः २७

ततो दिशः समुद्राश्च वरुणः सधनेश्वरः
यमोऽग्निर्वसवश्चैव चन्द्रादित्यौ ग्रहैः सह २८

तारारूपाणि सर्वाणि नक्षत्राणि ध्रुवस्तथा
रुद्रा रक्षांसि यक्षाश्च अश्विनौ दैत्यदानवाः २९

गन्धर्वाप्सरसश्चैव नारदः पर्वतस्तथा
पृथिवी च समुद्राश्च वर्षाणि गिरयस्तथा ३०

वृक्षाश्च वीरुधश्चैव ओषध्यश्च महाबलाः
नद्यः सर्वाः समाजग्मुः पशवश्चैव सर्वशः ३१

लोकस्य मातरश्चैव पृथिवी स्वर्ग एव च
भूतानि प्रकृतिश्चैव इन्द्रियाणि च सर्वशः ३२

तीर्थानि चैव सर्वाणि दानानि विविधानि च

ऋचो यजूंषि सामानि अथर्वाङ्गिरसावपि ३३

यज्ञाश्च क्रतवश्चैव इष्टयो नियमास्तथा
छन्दांसि चैव सर्वाणि पिशाचा देवयोनयः
ब्रह्मा च ऋषयश्चैव विष्णुः सानुचरस्तथा ३४

तेष्वागतेषु सर्वेषु भगवान्गोवृषध्वजः
सर्वकार्यविधिं कर्तुमादिदेश पितामहम् ३५

एकैकं कलशं तत्र सर्वौषधिसमन्वितम्
कृत्वाद्भिः पूरयित्वा च कुशेशयमुखावृतम् ३६

जयां च विजयां चैव सिंहीं व्याघ्रीं तथैव च
सुवर्चलां शङ्खपुष्पीं विष्णुक्रान्तां पुनर्नवाम् ३७

कुमारीं चन्द्रकान्तां च मृतसंजीवनीमपि
आदित्यवर्चसं चैव अमृतां श्रीनिकेतनाम् ३८

तथा कुमुद्वतीं चैव प्राक्षिपंस्तेष्वथौषधीः
पार्थिवेषु तदा व्यास सर्वेष्वेव गणेश्वराः ३९

सौवर्णेषु तु सर्वेषु तीर्थानि विविधानि च
दानानि चैव सर्वाणि भगवान्संन्यवेशयत् ४०

राजतेषु च कुम्भेषु मन्त्रांश्छन्दांसि चैव ह
क्रतूनन्यांश्च विविधा इष्टीः काम्यांस्तथेतरान् ४१

औदुम्बरेषु सर्वेषु सरितः सागरांस्तथा
तपांसि नियमांश्चैव भगवानभ्यविन्यसत् ४२

एकैकं कलशं तत्र अभिपूर्याभिमन्त्र्य च

वेष्टयित्वा च सूत्रेण देवेभ्यः प्रददौ विभुः ४३

स जग्राह तदा ब्रह्मा एकं कलशमात्मना
विष्णवे च ददावेकमेकमिन्द्राय धीमते
गणेभ्यस्तथा चान्यानृषिभ्यश्च पितामहः ४४

ततस्तमासने तस्मिन्नुपवेश्य महामनाः
अर्चयित्वा ततो ब्रह्मा स्वयमेवाभ्यषिञ्चत ४५

ततो विष्णुस्ततः शक्रो ऋषयश्च सहामरैः
गणाधिपाश्च सर्वे ते अभ्यषिञ्चन्त नन्दिनम् ४६

वासोयुगं च तद्दिव्यं गन्धान्दिव्यांस्तथैव च
केयूरे कुण्डले चैव मुकुटं हारमेव च
पट्टिसं शूलवज्रे च अशनीं च ददौ स्वयम् ४७

छत्रं जग्राह देवेन्द्रो वायुर्व्यजनमेव च
ऋषयस्तुष्टुवुश्चैव पितामहपुरोगमाः ४८

विष्णुरुवाच
नमः कुष्माण्डराजाय वज्रोद्यतकराय च
शालङ्कायनपौत्राय हलमार्गोत्थिताय च ४९

शिलादस्य च पुत्राय रुद्रजप्यकराय च
रुद्रभक्ताय देवाय नमोऽन्तर्जलशायिने ५०

गणानां पतये चैव भूतानां पतये नमः
उमापुत्राय देवाय पट्टिसायुधधारिणे ५१

नमो दंष्ट्राकरालाय ललाटनयनाय च
प्रमथाय वरेण्याय ईशानायार्पिताय च ५२

द्वाराध्यक्षाय शूराय सुयशापतये नमः
नमः प्रवरमालाय क्षीरोदनिलयाय च ५३

महागणाधिपतये महायोगेश्वराय च
दिण्डिमुण्डाय चण्डाय एकाक्षररताय च ५४

अक्षयायामृतायैव अजरायामराय च
पशूनां पतये चैव जेत्रे मृत्योस्तथैव च ५५

नमः पवनवेगाय सर्वज्ञायाजिताय च
अनेकशिरसे चैव अनेकचरणाय च ५६

किरीटिने कुण्डलिने महापरिघबाहवे
सर्वान्देवान्गणांश्चैव पाहि देव नमोऽस्तु ते ५७

सनत्कुमार उवाच
एवं स्तुत्वा ततो देवस्तस्मै व्यास महात्मने
प्राञ्जलिः प्रयतो भूत्वा जयशब्दं चकार ह ५८

ततो गणा जयेत्यूचुस्ततो देवास्ततोऽसुराः
ततः सर्वाणि भूतानि ब्रह्मा शक्रस्तथैव च ५९

ततः शङ्खांश्च भेरींश्च पटहाडम्बरांस्तथा
वंशांश्च पणवांश्चैव कृकवान्गोविषाणिकान् ६०

दिण्डिमान्वेणुकांश्चैव मर्दलांश्चैव सर्वशः
अवादयन्त गणपा हर्षयन्तो मुदा युताः ६१

सनत्कुमार उवाच
नन्दीश्वरस्य य इमं स्तवं देवाभिनिर्मितम्
पठेत सततं मर्त्यः स गच्छेन्मम लोकताम् ६२

नमो नन्दीश्वरायेति कृत्वा यः स्वप्नमाचरेत्
तस्य कुष्माराडराजेभ्यो न भयं विद्यते क्वचित्  ६३

यत्रायं स्थाप्यते नित्यं स्तवः परमपूजितः
न भयं तत्र भवति ग्रहेभ्यो व्यास सर्वदा  ६४

नन्दीश्वरं ये प्रणमन्ति मर्त्या नित्यं प्रसन्नेन्द्रियशुद्धसत्त्वाः
ते देवदेवस्य सहाद्रिपुत्र्या इष्टा वरिष्ठाश्च गणा भवन्ति  ६५

इति स्कन्दपुराणे चतुर्विंशतिमोऽध्यायः

स्कन्दपुराण २५

सनत्कुमार उवाच
ततस्तत्रागतान्देवान्देवताधिपतिर्भवः
मरुतः प्राह सम्पूज्य कन्यार्थं सदसत्पतिः  १

मरुतो ये महावेगा महासत्त्वा महौजसः
आमन्त्र्य नाम्ना तानीशः सशक्रः सपितामहः  २

युष्माकं सुयशा कन्या सुभगा दिव्यरूपिणी
दातुमर्हथ तां सुभ्रूं स्नुषां मह्यं महाबलाः  ३

मरुत ऊचुः
त्वमस्माकं च तस्याश्च सर्वस्य जगतस्तथा
प्रभविष्णुस्त्रिलोकेश न तु याचितुमर्हसि  ४

त्वयैव देया ग्राह्या च त्वं नो गतिरनुत्तमा
मा नः परानिवेशान याचनेन विभावय  ५

पिता नः कश्यपः श्रीमान्मरीचिश्च पितामहः
पितामहपिता ब्रह्मा तस्यापि त्वं पितामहः
स त्वं पितामहोऽस्माकं न परान्कर्तुमर्हसि  ६

स एवमुक्तो देवेशो मरुद्भिर्देवसत्तमैः
सुयशां मरुतां कन्यामानयामास तत्क्षणात् ७

स्वयं होतास्य तत्रासीद्ब्रह्मा लोकपितामहः
कश्यपश्च तथोद्गाता अत्रिः साम स्वयं जगौ
अथर्वाङ्गिरसौ देवौ ब्रह्मत्वमपि चक्रतुः ८

नारदः पर्वतश्चैव चित्रसेनश्च गायनः
विश्वावसू रुचिश्चैव हाहा हूहू तथैव च ९

तथा शालिशिरा यश्च विश्रुतो गण्डमण्डकः
ईतिश्चैवेन्द्रवाहश्च यज्ञवाहोऽथ दक्षिणः
एते चान्ये च गन्धर्वा जगुर्मधुरकण्ठनः १०

उर्वशी चैव रम्भा च घृताची पूर्वचित्त्यपि
तिलोत्तमा च विश्वाची अन्याश्चाप्सरसः शुभाः
अनृत्यन्त महाभागा नृत्तं सुरमनोहरम् ११

सनत्कुमार उवाच
स एवमभवद्व्यास विवाहस्तस्य धीमतः
नन्दिनो गणमुख्यस्य अनौपम्यो ह्यनिन्दितः १२

ततः स तु कृतोद्वाहो नन्दी गत्वा महामनाः
पादान्ववन्दे देवस्य देव्या ब्रह्मण एव च
शिलादस्य च लोकेशः श्रिया परमया युतः १३

देव उवाच
वरं वृणीष्व पुत्र त्वं स्नुषा चेयं तव प्रिया
वरं ददामि ते वत्स अनया सहमीप्सितम् १४

नन्द्युवाच

भगवन्यदि तुष्टोऽसि त्वयि भक्तिर्दृढास्तु मे
सदा च तुष्टो भव मे साम्बः सह गणेश्वरैः १५

पितरं चैव मे देव उत्पादकमिमं प्रभो
अनुग्रहेण युक्तेन योक्तुमर्हसि कामद १६

देव उवाच
सदाहं तव नन्दीश सुतुष्टः सगणेश्वरः
पार्वत्या सहितो धीमन्निदं च शृणु मे वचः १७

सदेष्टश्च वरिष्ठश्च परमैश्वर्यसंयुतः
महायोगी महेष्वासो महाबलपराक्रमः १८

अजय्यश्चैव जेता च पूज्येज्यश्च सदा भव
अहं यत्र भवांस्तत्र यत्र त्वं तत्र चाप्यहम् १९

अयं च ते पिता विप्रः परमैश्वर्यसंयुतः
भविष्यति गणाध्यक्षो महागणपतिर्मम २०

पर्वतं चास्य वैभ्राजं कामगं सर्वकाञ्चनम्
उपेतं भवनैर्दिव्यैः प्रयच्छामि जनावृतम्
तेनायं सर्वलोकेषु चरिष्यति यथेप्सितम् २१

स्थानं श्रीपर्वते चास्य भविष्यति सुपूजितम्
भृगौ तस्मिंश्च यः प्राणांस्त्यक्ष्यते वै सुधार्मिकः
स कामचारी वैभ्राजे गणपोऽस्य भविष्यति २२

सनत्कुमार उवाच
ततो देवी महाभागा शैलादेरददद्वरम्
सोऽब्रवीत्त्वयि भक्तिर्मे सदैवानपगा भवेत् २३

ततो मरुत्सुता चैव उभाभ्यामपि चोदिता
वरं वृणु यथेष्टं वै ताविदं प्रत्युवाच ह २४

युवयोरस्तु भक्तिर्मे तथा भर्तरि चैव हि
नित्यं चानपगा स्यान्मे धर्मे च मतिरुत्तमा
एतदिच्छामि देवेशौ वरं वरसहस्रदौ २५

सनत्कुमार उवाच
ततस्तावेवमेतत्ते भवितेति शुचिस्मिते
ऊचतुर्मुदितौ देवौ स्नुषां तां वरवर्णिनीम् २६

गणाश्चास्य ततोऽभ्येत्य सर्वे देवप्रियेप्सया
वरं ददुर्महासत्त्वाः स वव्रे काञ्चनप्रभः २७

युष्मासु मम भक्तिश्च ऐश्वर्यं चापि संमतम्
वश्याश्च यूयं सर्वे मे प्रियो युष्माकमेव च २८

गणा ऊचुः
भवान्मन्तानुमन्ता च गतिरागतिरेव च
अस्माकमीशः सर्वेषां देवानामपि चेश्वरः २९

कुष्माण्डानां वरिष्ठश्च रुद्राणां त्वं महाबलः
ईतीनां द्वारपालश्च प्रमथानां तथैव च ३०

महाबलो महायोगी सेनानीस्त्वं हि नो मतः
त्वं भूतो भूतनेता च नायकोऽथ विनायकः ३१

ग्रहाणामधिपश्चैव उग्रदण्डधरस्तथा
त्वमग्रयोधी शत्रुघ्नस्त्वं वीरस्त्वं दिवस्पतिः ३२

महानुभावस्त्वं चैव क्षीरोदनिलयश्च ह

जप्येश्वरनिकेतश्च जप्येश्वरविभावितः ३३

भावनः सर्वभूतानां वरदो वरदार्चितः
अस्माकं वरदश्चैव भव भूतेश्वर प्रभो ३४

सनत्कुमार उवाच
स एवं गणपैः सर्वैः स्तुतो नन्दीश्वरो विभुः
उवाच प्रणतः सर्वान्ब्रूत किं करवाणि वः ३५

त एवमुक्ता गणपाः सर्व एव महाबलाः
ऊचुस्तं दिव्यभावज्ञा देवदेवस्य संनिधौ ३६

त्वमस्माकं गणाध्यक्षः कृतो देवेन शम्भुना
अस्माभिश्चाभिषिक्तस्त्वं नायको धर्मदायकः ३७

स त्वं शिवश्च सौम्यश्च गुणवानगुणेष्वपि
क्षमाशौचदमोपेतो भव नः प्रियकृत्सदा ३८

सनत्कुमार उवाच
एवमुक्तस्तदा सर्वान्प्रणम्य बहुमानतः
शिरस्यञ्जलिमाधाय गणपानस्तुवत्तदा ३९

नन्द्युवाच
नमो वः सर्वभूतेभ्यो नमो योगिभ्य एव च
नमश्चाप्यनिकेतेभ्यो योगीशेभ्यो नमस्तथा ४०

नमः कामचरेभ्यश्च नम उग्रेभ्य एव च
मृत्युभ्यश्च यमेभ्यश्च कालेभ्यश्च नमो नमः ४१

नमः काञ्चनमालेभ्यः सर्वधर्मिभ्य एव च
नमो वो वधकेभ्यश्च अवध्येभ्यस्तथैव च ४२

नमः परमयोगिभ्यो जटिभ्यश्च नमो नमः
नमो वोऽदृश्यरूपेभ्यो विकृतेभ्यस्तथैव च ४३

नमो वल्कलवासेभ्यः कृत्तिवासेभ्य एव च
नमः श्वेताम्बरस्त्रग्भ्यश्चित्रस्त्रग्भ्यो नमो नमः ४४

धावद्भ्यश्च द्रवद्भ्यश्च प्रस्थितेभ्यो नमो नमः
नमो मुनिभ्यो गायद्भ्यो जपद्भ्यश्च नमो नमः ४५

नमः शरभरूपेभ्यः शतरूपेभ्य एव च
नमः पर्वतवासेभ्यो व्याघ्ररूपेभ्य एव च ४६

नमो मार्जाररूपेभ्यः काककोकेभ्य एव च
नमो दैवतरूपेभ्यः पवनेभ्यस्तथैव च ४७

नमोऽग्निभ्यस्तथाद्भ्यश्च वरुणेभ्यस्तथैव च
नमो धनेशरूपेभ्यः सर्वरूपिभ्य एव च ४८

नमश्चोदरवक्त्रेभ्यः सर्ववक्त्रेभ्य एव च
नमो वामनरूपेभ्यो वामरूपेभ्य एव च ४९

देवासुरमनुष्याणामाप्यायिभ्यो नमो नमः
नमो वः सर्वभूतानां नमो वः सर्वतः शुभाः ५०

ग्रहेभ्यश्च नमो वोऽस्तु मोक्षेभ्यश्च नमस्तथा
शुभेभ्यश्च नमो वोऽस्तु अशुभेभ्यस्तथैव च
मम सौम्याः शिवाश्चैव भवन्तु गणनायकाः ५१

इति स्तुता गणपतयो महाबलाः शुभैर्वचोभिः सुरशत्रुनाशनाः
दिशन्तु मे सुखमतुलं सुखप्रदा बलं च वीर्यं स्थिरतां च संयुगे ५२

तपोऽक्षयं स्थानमथातुलां गतिं यशस्तथाग्र्यं बहु धर्मनित्यताम्
दिशन्तु सर्वं मनसेप्सितं च मे सुरेश्वराः पुष्टिमनुत्तमां तथा ५३

सनत्कुमार उवाच
इमौ नन्दिगणेन्द्राणां स्तवौ योऽध्येति नित्यशः
सोऽश्वमेधावभृथवत्सर्वपापैः प्रमुच्यते ५४

सन्ध्यायामपरस्यां तु जपन्पापं दिवाकृतम्
पूर्वस्यां संत्यजेद्वापि सर्वरात्रिकृतं जपन् ५५

सनत्कुमार उवाच
ततस्ते गणपाः सर्वे संस्तुतास्तेन धीमता
निसृष्टाश्च तदा जग्मुः प्रणिपत्य वृषध्वजम् ५६

देवाश्च सर्वलोकाश्च ततो देवः स्वयं प्रभुः
सृष्ट्वा नन्दीश्वरगृहं प्रदाय च महामनाः
ईप्सितं सह देव्या वै जगाम स्थानमव्ययम् ५७

य इमं नन्दिनो जन्म वरदानं तथैव च
अभिषेकं विवाहं च पठेद्वा श्रावयीत वा
ब्राह्मणः स मृतो याति नन्दीश्वरसलोकताम् ५८

यो नियतस्तु पठेत्प्रयतात्मा सर्वमिमं प्रणतो भवभक्त्या
सोऽपि गतः परलोकविचारी नन्दिसमोऽनुचरो हि मम स्यात् ५९

इति स्कन्दपुराणे पञ्चविंशतितमोऽध्यायः

These are the first 25 of 183 chapters of the muula text of the new critical edition being published by Prof. Hans Bakker and colleagues out of Groningen. Based on a vital and very early palm-leaf manuscript from Nepal.